॥ श्रीः ॥

# स्मार्त्तप्रभुः



## (प्रथमो भागः)



काशीहिन्दुविश्वविद्यालयधर्मविज्ञान
विभागाध्यक्ष (प्रिन्सिपल)
श्रीमत्साग्निकपण्डितप्रभुदत्तशास्त्रिसूनुना
विद्याधर शर्मणा
विरचितः संशोधितश्च ।

तेनैव प्रकाशतां नीतः ।



गणपति कृष्ण गुर्जर
द्वारा—
काश्यां लक्ष्मीनारायणयन्त्रालये
मुद्रितः ।

श्रीगणेशाय नमः

# स्मार्त्तप्रभुः ।

सर्वाधारं सर्वरूपं सर्वयज्ञफलप्रदम् ।
सर्वेशं सर्वदातारं शर्वं शर्मार्थमाश्रये ॥ १ ॥

प्रतिष्ठादिनात्प्राङ् नवमे सप्तमे पञ्चमे तृतीये पूर्वे वा दिने शिल्पिनस्तत्परिचारकांश्च सम्पूज्य क्षमध्वमिति तान् प्रार्थ्य (इत्युद्योते) शिल्पिस्थानान्मण्डपप्रासादप्रादक्षिण्येन देवं तत्र भद्रं कर्णेभिरित्यानीयासने निधाय कृत-

---

आन्तरध्वान्तसन्दोहाघौघविध्वंसपाटवम् ।
अवलम्बे निरालम्बः साम्ब त्र्यम्बकसत्पदम् ॥१॥
श्रीमच्छशिकलामौलिप्रमोदवनचारिणः ।
श्रौतस्मार्त्ताग्निहोत्राद्यैःप्रद्योतितदिशः सदा ॥२॥
पितुः श्रीप्रभुदत्तस्य चरणावीप्सितप्रदौ ।
प्रणम्य शिरसा गौड़श्रीविद्याधरशर्मणा ॥३॥
स्मार्त्तप्रभुं स्वरचितं ग्रन्थं सुव्याचिकीर्षता ।
क्रियते बालबोधाय स्मार्त्तविद्याधरी मया ॥४॥

पञ्चमे इति । सम्पाद्य सम्भृतिं सम्यक् सर्वकर्मोपयोगिनीम् ॥ पञ्चरात्रं चतूरात्रं त्रिरात्रं चैकरात्रकम् ॥ आश्रित्यान्यतमं पक्षं कर्मसिद्धिर्यथा भवेदिति हेमाद्रावुक्तेः । शिल्पिन इति । आनीय लिङ्गमर्चां वा शिल्पिनं पूजयेद् बुधः । वस्त्रादिभिश्च रत्नैश्च

येऽपि तत्परिचारका । क्षमध्वमिति तान्ब्रूयाद्यजमानो ह्यतःपरमिति मात्स्योक्तेः । अत्र शिल्पिनस्तत्परिचारकपूजा च दृष्टार्था । शिल्पिस्थानादिति । शिल्पिस्थानात्प्रागेव कृतजलाधिवासां मूर्तिं मानीयेति प्रतिष्ठादर्शे । तत्रेति । कर्मकुट्यामिति मयूखानुसारिणः । (मण्डपप्रवेशपूर्वकालीनप्रतिमानिर्माणे प्राणिवधादिदोषनिरासको होमो यत्र क्रियते सा कर्मकुटी ) स्नानमण्डपे इति दिनकरः । स्वगृह इति प्रतिष्ठेन्दौ । तथा च परशुरामः । पट्टकूले तथा शुद्धे परिधायाथ वाससी । अङ्गणे गृहशालायामथवा गौणमण्डपे । उपविश्यासने शुद्धे पीठे वा चित्रकंबले । कुर्वीत तिलकं सम्यक् कर्पूरादिसुगन्धिनेति । तेन मधुपर्कान्तं गृहादावेव कार्यं विशेषाश्रवणात् । जलाशयविधौ मात्स्ये "पुण्येह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनम् । प्रागुदक्प्रवणे देशे तडागस्य समीपतः" इत्यादिना पुण्याहवाचनानन्तरं मण्डपनिर्माणमुक्त्वा "शुभास्तत्राष्टहोतारो द्वारपालास्तथाष्ट वै" इत्यादिना ऋत्विग्वरणं चोक्त्वा यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । पश्चिमं द्वारमाश्रित्य प्रविशेद्यागमण्डपमित्युक्तेश्च । तेन मधुपर्कानन्तरं मण्डपप्रवेशो नार्वाक् । अत एव पश्चिमं द्वारमाश्रित्येतिवचनलेखनावसरे "अत्र प्रवेशानन्तरकार्याणामाचार्याद्यधीनत्वात्प्रवेशे आचार्यादिसाहित्यमपि बोध्यं तेनायमर्थः आचार्यादिवरणपूजान्तं गृहादौ विधाय मण्डपकुण्डादि कृत्वा आचार्यादिसहितो यजमानो मण्डपं प्रविशेत् । तेन ये मण्डपे वरणादि कुर्यादित्याहुस्ते परास्ता" इति कोटिहोमपद्धतावुक्तम् । यत्तु पुण्याहवाचनात्पूर्वं मण्डपमनुतिष्ठन्ति तत्लौकयार्थं ज्योतिष्टोमे सदोमण्डपनिर्माणवत् । वस्तुतस्तु सहायसम्पत्तौ सर्वं कुण्डमण्डपवेद्यादि मधुपर्कदानानन्तरमेव सूचयेन्मुख्यकल्पत्वात् । असम्भवे पूर्वकृतमण्डपस्येदानीं स्पर्शमात्रं वा कार्यं ज्योतिष्टोमे पूर्वनिर्मितसदोमण्डपादिस्पर्शवत् । मण्डपादिमानं वाऽत्र कार्यं इष्टिसमये दर्शपूर्णमासचातुर्मास्यविहारमानवत् । एतेनैकत्र

नित्यक्रियः कृतमङ्गलस्नानो यजमानो निर्णेजनान्तं वैश्वदेवं कृत्वा पूर्वाह्णे प्राङ्मुख उपविश्य स्वदक्षिणतः

---

विनियुक्तो मण्डपोऽन्यत्र न विनियोज्यो मण्डपकरणस्य कर्माङ्गत्वादित्याहुः । कृतनित्याक्रिय इति । वाराहे । सुस्नातः सम्यगाचान्तः कृतसन्ध्यादिकक्रियः । कामक्रोधविहीनश्च पाखण्डस्पर्शवर्जितः । जितेन्द्रियः सत्यवादी सर्वकर्मसु शस्यते इति । कृतमङ्गलस्नान इति । परशुरामः । पातादिवर्जिते प्रातर्नित्यं कर्म समारभेत् । नद्यां वाऽथ तडागे वा देवखाते ह्रदेऽथवा । सूत्रोक्तविधिना शौचपूर्वं स्नानं समाचरेत् ॥ ततः स्वगृहमागत्य मङ्गलस्नानमाचरेत् । सर्वौषधीगन्धचूर्णयुतैः कृष्णतिलामलैः । उद्वर्त्याङ्गानि तैलेन चम्पकादिसुगन्धिना इति । निर्णेजनान्तमिति । यद्यपि सम्प्राप्ते पार्वणश्राद्धे एकोद्दिष्टे तथैव च । अग्रतो वैश्वदेवः स्यात्पश्चादेकादशेऽहनीति परिशिष्टात्, श्राद्धात्प्रागेव कुर्वीत वैश्वदेवं तु साग्निकः । एकादशाहिकं मुक्त्वा तत्र ह्यन्ते विधीयते । इतिहेमाद्रौ शालङ्कायनवचनाच्च साग्निकस्य सर्वत्र श्राद्धे आदौ वैश्वदेवो विहितः । निरग्निकस्य तु पितृश्राद्धमकृत्वा तु वैश्वदेवं करोति यः । अकृतं तद् भवेच्छ्राद्धं पितृणान्नोपतिष्ठते इति गौतमीयात् वैश्वदेवमकृत्वैव श्राद्धं कुर्यादनग्निकः । लौकिकेऽग्नौ हुते शेषः पितृणान्नोपतिष्ठते इति वसिष्ठवचनाच्च श्राद्धान्ते एव वैश्वदेवः प्राप्नोति तथापि निरग्निनाप्याभ्युदयिकश्राद्धे चिकीर्षिते पूर्वमेव वैश्वदेवः कार्यः । आदौ वृद्धौ क्षये चान्ते दर्शे मध्ये महालये । एकोद्दिष्टे निवृत्ते तु वैश्वदेवो विधीयते इतिशाङ्खायनपरिशिष्टात् । रेणुरपि । निर्णेजनान्तं निर्वर्त्य वैश्वदेवं ततोद्विजः । श्राद्धं करिष्ये सङ्कल्प्य तत्कृत्वा पूर्ववत्स्थितः । असून्नियस्य संयुक्तः पत्न्या, संकल्पमुच्चरेदिति । एतद्वचनात्प्रधानसङ्कल्पात्पूर्वमेव वैश्वदेव इत्या-

पत्नीमुपवेश्य ( पुत्रादि संस्कारे तु पत्नीदक्षिणतः सं-

याति। अत्रेयं व्यवस्था। नान्दीश्राद्धस्य पार्थक्येन सङ्कल्पकरणे मातृपूजनोत्तरं वैश्वदेवं कृत्वा तत्कर्त्तव्यम्। पुण्याहवाचनादिना सहैतत्सङ्कल्पे तु पुण्याहवाचनात्पूर्वं गणपतिपूजनात्पूर्वं वा वैश्वदेवः कार्यः स च सर्वेषां श्राद्धपाकेनैवेति कर्कभाष्यादौ विस्तरः।

पूर्वाह्णे इति। नारसिंहे। देवकार्यस्य सर्वस्य पूर्वाह्णः कालई-रित इति। प्राङ्मुख इति। उदङ्मुखः प्राङ्मुखो वा दैवं कर्म समाचरेत्। उपविश्येति। आसीन ऊर्ध्वः प्रह्वो वा नियमो यत्र नेदृशः। तदासीनेन कर्त्तव्यं न प्रह्वेण न तिष्ठतेति। स्वदक्षिणत इति। व्रतबन्धे विवाहे च चतुर्थीसहभोजने। व्रते दाने मखे श्राद्धे पत्नी तिष्ठति दक्षिणे। सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः शुभा। अभिषेके विप्रपादक्षालने चैव वामतः। धर्मप्रवृत्तौ। जातके नामके चैव ह्यन्नप्राशनकर्मणि। तथा निष्क्रमणे चैव पत्नी पुत्रश्च दक्षिणे। गर्भा-धाने पुंसवने सीमन्तोन्नयने तथा। वधूप्रवेशने चैव पुनः सन्धान एवच। प्रदाने मधुपर्कस्य कन्यादाने तथैव च। कर्मस्वेतेषु भार्यां वै दक्षिणे तूपवेशयेत्। कात्यायनः ४।७।१८। पश्चादग्नेरुपविशतो दक्षिणतः पत्नी इति। यत्तु शान्तिकेषु च सर्वेषु प्रतिष्ठोद्यापनादिषु। वामे ह्युपविशेत्पत्नी व्याघ्रस्य वचनं यथा। यच्च पत्नी वामे सदा प्रोक्ता मूलाश्लेषाविधानयोरिति तन्निर्मूलम्। पत्नीमुपवेश्येति। धर्मे-चार्थे च कामे च नातिचरितव्येति वाक्येन दम्पत्योः सहाधि कारो* यत्र दम्पत्योः सहत्वं श्रुतं तत्रैव। यत्र तु महादानव्रतादौ

* अधिकारो नाम फलभोक्तृत्वसमानाधिकरणं कर्तृत्वम्। श्राद्धादौ पितुः फलभोगेऽपि कर्तृत्वाभावात् ऋत्विजां च कर्तृत्वेऽपि फलभोगाभावाद्विशेषण-द्वयम्। नचैवं जातेष्ट्यादौ पितुः फलभोगाभावेन कर्तृत्वाभावान्नाधिकारः

स्कार्यं चोपवेश्य) पवित्रे स्थो ऽवैष्णव्यौ सवितुर्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः। तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुने तच्छकेयम्। इति-मन्त्रेण धृतकरद्वयपवित्रः

---

पृथगधिकारस्तत्र पृथगेव कर्तृत्वं तत्रापि सधवाया भर्तृद्वारैव कर्म विधवायास्तु स्वतन्त्राधिकारो महादानव्रतादिषु। तत्र भर्तृपितॄणां स्वीयानां वेज्यत्वम्। स चायमधिकारो न दम्पत्योः सत्रवत्प्रत्येकं तत्र हि यजेरन्नासीरन्निति कर्तृत्वबहुत्वश्रवणात्तथा अत्र तु कर्तृत्वस्य व्यासज्यवृत्तित्वाद्व्यासज्यवृत्त्येवाधिकार इति षष्ठे स्पष्टम्। अत्र च दम्पत्योः कर्तृत्वं न कृत्याश्रयत्वं तथात्वे तस्य प्रत्येकवृत्तित्वात्प्रत्येकमधिकारापत्तेः किन्तु कृत्याश्रयत्वसमनियतमखण्डोपाधिरूपमेव तत्। पङ्ग्वादीनां सुतसंस्कारेषु कर्म कर्तुमशक्यत्वेन नैवाधिकारो नित्यातिरिक्तः सर्वत्र, व्रतादिषु तु कर्तृत्वमस्त्येवेति। मन्त्रधृतेति। प्रयोगपारिजाते। मन्त्रेण धारयेद्विप्रः पवित्रं सर्वकर्मसु। मन्त्रं विना धृतं यत्तु पवित्रमफलं भवेत्। करद्वयेति। अत्रिः। उभाभ्यामेव पाणिभ्यां विप्रैर्दर्भपवित्रके। धारणीये प्रयत्नेन ब्रह्मग्रन्थिसमन्विते। ब्रह्मग्रन्थिमत्पवित्रलक्षणं गारुडे। सन्त्यज्य वैष्णवं मार्गं ब्रह्ममार्ग-

---

स्यादिति वाच्यम्। प्रवृत्तिप्रयोजकफलेच्छासमानाधिकरणकर्तृत्वस्य विवक्षितत्वात्। जातेष्ट्यादौ च फलस्यान्यनिष्ठत्वेऽपि पुत्रस्य फलं भूयादित्येव प्रवृत्तिप्रयोजिकायाः फलेच्छाया यजमाननिष्ठत्वादधिकाराविघातः। एवं श्राद्धादिस्थलेऽपि। तत्रापि पितुः फलं भूयादिति प्रवृत्तिप्रयोजिकाया इच्छायाः पुत्रनिष्ठत्वात्। न चैवमृत्विजामपि यजमानस्य फलं भूयादितीच्छासमानाधिकरणकर्तृत्वादधिकारः स्यादिति वाच्यम्। दक्षिणाप्राप्तिर्मे भूयादितीच्छाया एव ऋत्विक्प्रवृत्तिजनकत्वेन यजमानस्य फलं भूयादितीच्छायाः प्रवृत्तिप्रयोजकत्वाभावादिति।

विनिःसृतम् । सकृत्प्रदक्षिणीकृत्य पवित्रमभिधीयते । तद्ब्रह्मग्रन्थिमत्प्रोक्तं पवित्रं वेदवादिभिः । वैष्णवो मार्गः पश्चाद्भागः । पवित्र कर्तुरभिमुखप्रदेशो ब्रह्ममार्गः । द्विगुणीकृतानां दर्भशिखानां यदा स एव पाशः प्रादक्षिण्येन समग्रवेष्टनं विधाय पुरोभागेन प्रवेश्यते तदा सब्रह्मग्रन्थिरित्यर्थः । पवित्रदर्भसङ्ख्या गारुडे । सप्तभिर्दर्भपिञ्जूलैः कुर्याद् द्विजपवित्रकम् । पञ्चभिः क्षत्रियस्यैव चतुर्भिस्तु तथा विशः । द्वाभ्यां शूद्रस्य विहितमङ्गनानां तथैव च । मार्कण्डेयः । चतुर्भिर्दर्भपिञ्जूलैर्ब्राह्मणस्य पवित्रकम् । एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम् । सर्वेषां वा भवेद् द्वाभ्यां पवित्रं ग्रथितं न वा । कश्यपः। सव्ये चैव तथा त्रीन्वै बिभृयाद् द्वौ च दक्षिणे । सव्यः सोपग्रहः कार्यो दक्षिणः सपवित्रक इति छन्दोगपरिशिष्टे । तेनात्र ग्रन्थिमद्भ्यामग्रन्थिमद्भ्यां वा पवित्राभ्यां करयोः पवित्रवत्तेत्येकः पक्षः । द्वौ दक्षिणे सव्ये त्रीनित्यपरः । सव्ये त्रयः कुशा दक्षिणे पवित्रमिति तृतीयः । मैथिलास्तु नवपत्रमनामिकामूलदेशे, पत्रत्रयात्मकं तस्या एव द्वितीयपर्वणि धारयन्ति तन्निर्मूलम् । मार्कण्डेयः । चतुर्भिः शान्तिके कार्यं पौष्टिके पञ्चभिस्तथा । पैतृके तु त्रयो दर्भा द्वौ दर्भौ नित्यकर्मणि । पवित्रधारणस्थानमाह हारीतः । द्वयोस्तु पर्वणोर्मध्ये पवित्रं धारयेद्बुधः। अन्यत्रापि । अनामिकामूलदेशे पवित्रं धारयेद्बुधः। शारदातिलके । ताम्रतारसुवर्णानामर्कषोडशखेन्दुभिः । कृता त्रिशक्तिमुद्रेयं तीव्रदारिद्र्यनाशिनी । माषाणां षोडशादूर्ध्वं कुर्याद्धेमपवित्रकम् । लघुहारीतः । जपे होमे तथा दाने स्वाध्याये पितृकर्मणि । अशून्यं तु करं कुर्यात्सुवर्णरजतैः कुशैः । अशून्यं सामान्याभावपरम् । सुवर्णरजतैरिति जातिबोधनाय बहुवचनम् । सुवर्णादिजातीयेनेत्यर्थः । मैथिलास्तु सुवर्णरजतैरिति बहुवचनमेकसुवर्णाद्यवयविधारणेऽप्युपपद्यते । सुवर्णत्वादिजातेरवयवावयविवृत्तित्वादित्याहुः । ग्रन्थिमत्पवित्रपाणिनाऽऽचमननिषेधो हारीतस्मृतौ । ग्रन्थिर्यस्य

## स्मार्त्तविधिना द्विराचम्य

पवित्रस्य न तेनाचमनं चरेदिति । आचामेत्प्रयतोनित्यं पवित्रेण द्विजोत्तमः । नोच्छिष्टस्तु भवेत्तत्र भुक्तोच्छिष्टं विवर्जयेदिति तत्रैवोक्तेर्विकल्पः ।

स्मार्त्तविधिनेति । शुद्धं स्मार्त्तं तथा चैव पौराणं वैदिकं तथा । श्रौतं स्मार्त्तं तान्त्रिकं च षड्विधं श्रुतिचोदितम् । विण्मूत्रादिकशौचेषु शुद्धं च परिकीर्त्तितम् । स्मार्त्तं पौराणिके कर्मण्याचामे द्विधिपूर्वकम् । वैदिकं श्रौतमित्यादि ब्रह्मयज्ञादिपूर्वकम् । अस्त्रविद्यादिकार्येषु तान्त्रिको विधिरुच्यते । मनुः—ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् । कायत्रैदशिकाभ्यां वा न पित्र्येण कदाचन । अङ्गुष्ठमूलस्य तलं ब्राह्मं तीर्थं प्रचक्षते । कायमङ्गुलिमूलेऽग्रे दैवं, पित्र्यं तयोरधः । त्रिराचामेदपः पूर्वं द्विःप्रमृज्यात्ततोमुखम् । खानिचैव स्पृशेदद्भिरात्मानं शिर एव च । याज्ञवल्क्यः । हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः । शुद्ध्येरन् स्त्री च शूद्रश्च सकृत्स्पृष्टाभिरन्ततः । सकृदिति त्रित्वमात्रापवादकं न तु सर्वेतिकर्त्तव्यतापरं तेन सर्वाऽप्यङ्गस्पर्शनादिरूपेतिकर्त्तव्यता स्त्रीशूद्राभ्यां कर्त्तव्यैव । अन्तत ओष्ठप्रान्तेन । ग्रहणे विशेषमाह कण्वः । संहताङ्गुलिना तोयं गृहीत्वा पाणिना द्विजः । मुक्ताङ्गुष्ठकनिष्ठेन शेषेणाचमनं चरेत् । शङ्खः । तर्जन्यङ्गुष्ठयोगेन स्पृशेन्नासापुटद्वयम् । मध्यमाङ्गुष्ठयोगेन स्पृशेन्नेत्रद्वयं ततः । अङ्गुष्ठस्यानामिकाया योगेन श्रोत्रयोः स्पृशेत् । कनिष्ठाङ्गुष्ठयोगेन स्पृशेत्स्कन्धद्वयं ततः । नाभिं च हृदयं तद्वत्स्पृशेत्पाणितलेन तु । संस्पृशेत्तु ततः शीर्षमयमाचमने विधिः ।

द्विराचम्येति । इदं स्मार्ताचमनं द्विराचमनेऽखिलमावर्त्तनीयम् । द्विराचामः क्रियादिष्विति स्मरणात् । अत्र केशवादिनामान्युच्चारयन्ति ।

प्राणानायम्य ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः ॐ पुण्डरीकाक्षः पुनातु इति कुशाग्रयानीतजलैरात्मानं स्वदक्षिणस्थापितान् पूजासम्भारांश्च संप्रोक्ष्य अक्षतपुञ्जे रक्षादीपं निधाय ।

---

ॐ केशवाय नमः नारायणाय० माधवाय० गोविन्दाय० विष्णवे० मधुसूदनाय० त्रिविक्रमाय० वामनाय० श्रीधराय० हृषीकेशाय० पद्मनाभाय० दामोदराय० सङ्कर्षणाय० वासुदेवाय० अनिरुद्धाय० पुरुषोत्तमाय० अधोक्षजाय० नारसिंहाय० अच्युताय० जनार्द्दनाय० उपेन्द्राय० हरये० कृष्णाय० प्रणवाय० ।

प्राणानायम्येति । प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः । सव्याहृतिकां सप्रणवां गायत्रीं शिरसा सह । त्रिःपठेदायतप्राणः प्राणायामः स उच्यते । कनिष्ठानामिकाङ्गुष्ठैर्यन्नासापुटधारणम् । प्राणायामः स विज्ञेयस्तर्जनीमध्यमे विना । संप्रोक्ष्येति नाप्रोक्षितं स्पृशेत्किञ्चिद्दैवे पित्र्ये च कर्मणीति श्राद्धविवेके । तच्च अपवित्र इति श्लोकं पठित्वा पुण्डरीकाक्षः पुनात्वित्युच्चार्य कर्तव्यमिति तत्रैव निरूपितम् । अक्षतपुञ्जे इति । दीपं न स्थापयेद् भूमौ घृततैले न मिश्रयेत् । पात्रं तस्य न भग्नं स्याद्वर्त्तिका चाप्यदूषिता । दैवस्य दक्षिणे पार्श्वे दीपं दद्याद्यथाविधि । साधारं स्थापयेद्दीपमन्यथा ह्यशुभं भवेदिति भूमौ दीपस्थापननिषेधात् । रक्षादीपमिति । तन्त्रसारे ॥ विना दीपेन सकला कार्यसिद्धिर्न जायते ॥ अतः प्रकाशको दीपः पूर्वं स्थाप्यो यथाविधि । स्थापनदेशश्चोक्तः पारिजाते । कर्मादौ स्थापयेद्दीपं पूर्वभागे विचक्षणः । दीपस्थानं समाश्रित्य कृतं कर्म फलप्रदमिति । तत्रैव । आत्मनो दक्षिणे भागे तुलस्यादि निधापयेत् । घृतदीपं च तत्रैव तैलस्य तु विपर्यय इति । मन्त्रमहोदधौ । घृतदीपो दक्षिणे स्यात्तैलदीपस्तु वामतः । सितवर्त्तियुतो दक्षे वामेऽङ्गे रक्तवर्त्तिक इति । पित्र्ये कर्मणि दक्षिणस्यां दीपस्थापनं तत्र तस्या एव प्रधानत्वादिति युक्तम् ।

## शान्तिपाठं पठेत् ।

---

आयुर्दः प्राङ्मुखो दीपो धनदः स्यादुदङ्मुखः । प्रत्यङ्मुखो दुःखदोऽसौ हानिदो दक्षिणामुख इति ।

शान्तिपाठमिति । अन्वर्था चेयं संज्ञा । द्यौः शान्तिरित्यादीनां शान्तिपदघटितत्वेन छत्रिन्यायेन सर्वेषां तदभिधानस्य योग्यत्वात् । आवश्यकोऽयं कर्मादौ । शान्तिकरणमाद्यन्तयोः स्वाध्यायदर्शनात् ( २६. ७. ५८. ) इति कात्यायनसूत्रे उक्तत्वात् । अस्य सूत्रस्य प्रवर्ग्यविषयत्वेऽपि एकत्र निर्णीतः शास्त्रार्थः सर्वत्र प्रत्यायको भवतीति न्यायात् अविरोधात्सामान्यादितरेषु तथात्वमिति न्यायाच्चात्रोपस्थितिः । शान्तिमन्त्राणां देशभेदेन शाखाभेदेन च नानात्वेऽपि तत्तद्देशीयास्तत्तच्छाखीयाश्च ग्राह्याः ( एवं लक्ष्मीनारायणादिदेवेषु सुमुखश्चेत्यादिपाठेऽपि तत्तद्देशसम्प्रदायोऽनुसरणीयः ) ते च आ नो भद्रा इति दशकण्डिकात्मकोऽनुवाको द्यौःशान्तिर्यतोयत इति च । एतेषामेव संस्कारभास्करादिनिबन्धेषूपलम्भात् । मात्स्ये यजुर्वेदिद्वारसूक्तजपे अस्यैवानुवाकस्य भद्रसूक्तत्वेन ग्रहणाच्च । गणानान्त्वा अंबे अंबिके इत्यादि तु नोपनिबद्धमनुपलम्भात् । ( श्रौते कर्मणि सोमयागादौ तु ऋचंवाचमिति शान्त्यध्यायः पठनीयः) एते मन्त्राः सस्वरं पठनीयाः । मन्त्रसमधीतस्वरबाधे प्रमाणाभावात् । मन्त्रो हीनः स्वरतो वर्णतो वेति निन्दाऽर्थवादाच्च । अत एव एकश्रुति दूरात्संबुद्धौ यज्ञकर्मण्यजपन्यूङ्खसामसु (१. २. ३७.) इति पाणिनिना, एकश्रुति दूरात्संबुद्धौ यज्ञकर्मणि सुब्रह्मण्यासामजपन्यूङ्खयाजमानवर्जम् ( १. ८. १९ ) इति कातीयश्रौतसूत्रे, प्रावचनो वा यजुषि सामजपन्यूङ्खवर्जम् ( १. ११८ ) इति यजुः प्रातिशाख्ये च यज्ञकर्मणि जपादिवर्जमेकश्रुतिविधानेन जपोपस्थानादिषु त्रैस्वर्यं बोधितम् । अभिषेकपूजनहोमगायत्रीजपादिषु अभिषेकपात्रधारणादौ हस्तस्य

व्यापृतत्वान्न हस्तेन स्वरप्रदर्शनम्। यथाऽऽहुः। जपे होमे मखे श्राद्धेऽभिषेके पितृकर्मणि। हस्तस्वरं न कुर्वीत सन्ध्यादौ देवपूजने इति। उपस्थाने जपे होमे मार्जने यज्ञकर्मणि। कण्ठ स्वरं प्रकुर्वीत हस्तस्वरविवर्जितमिति च। श्रौतोल्लासेऽपि। उपस्थाने जपे होमे दोहे च यज्ञकर्मणि। हस्तस्वरं न कुर्वीत शेषास्तु स्वरसंयुता इति।

जपरुद्रे तु नैषां प्रवृत्तिः। तेषां गायत्र्यादिजपपरत्वात्। नाप्येकश्रुतिदूरादित्यादीनाम्। तेषां मयीदमिति यजमानो जपतीत्यादिसूत्रोपात्तजपतिशब्दवाच्यजपपरत्वात्। अतएव प्रातिशाख्ये जपे पुनरेकश्रुतिस्वरविधानं सङ्गच्छते। तस्माज्जपरुद्रे मन्त्रसमधीतस्वरः प्रयोज्य एव। वस्तुतस्तु प्रावचनो वा यजुषीति सूत्रात्सर्वत्र हस्तस्वरो वैकल्पिक इति। स्वाध्यायादौ तु त्रैस्वर्यमेव। अयज्ञकर्मत्वात्। अभिषेकपात्रस्य रज्ज्वादिना धारणे तु स्वराः प्रयोज्या एवेति नव्याः। एवं न्यासमन्त्रेष्वपि। तानो वा नित्यत्वात् (१. ८. १८) इति कातीये करणमन्त्रेष्वभिहितस्तानापरपर्याय एकश्रुतिस्वरो न प्रवर्त्तते। यज्ञकर्मणि करणमन्त्रेष्वपि वैकल्पिक एकश्रुतिस्वरोऽभिहितः प्रातिशाख्ये प्रावचनो वा यजुषीति। न च न्यासमन्त्राणां करणत्वमस्ति मन्त्रेण शिखायां न्यसेदिति, न्यासक्रियां प्रति मन्त्रस्य कर्मत्वेनान्वयात्। करणत्वेनान्वये किं न्यसेदित्याकाङ्क्षाया अनुपक्षीणत्वात्। एवं च मन्त्रान्तैः कर्मादिः सन्निपात्योऽभिधानात् (१.४.५.) इति परिभाषाऽपि नेह प्रवर्त्तते। मन्त्राणां करणत्वेन कर्मान्वयोक्तेः। परिभाषायाश्च करणमन्त्रविषयत्वात् प्रकृते च करणमन्त्रत्वाभावात्। तथा चादौ शिखां स्पृष्ट्वा ततो यातेरुद्रेत्यादिमन्त्रं सस्वरं जपेदित्यनन्तः। तस्मात् त्रैस्वर्यमेव न्यासमन्त्रेषु। अज्ञातस्वरा मन्त्रास्तु एकश्रुत्यैव प्रयोज्याः। अविज्ञातस्वरा मन्त्राः प्रयोक्तव्याः प्रयोक्तृभिः। एकश्रुत्यैव होमेषु विज्ञाताश्च विकल्पिता इति। तेन तानो वा यज्ञकर्मणीत्यादिकं सर्वमविज्ञातस्वरविषयमिति संस्कारचिन्तामणौ। ओ३म् इति।

ओ३म् आनो भद्राः क्रतवो यन्तु विश्वतोऽदब्धासोऽअपरीतासऽउद्भिदः । देवा नो यथा सदमिद्वृधेऽअसन्नप्रायुवो रक्षितारो दिवेदिवे ॥ १ ॥ देवानां भद्रा

---

मन्त्रादौ सर्वत्र प्रणवः प्रयोक्तव्य । मन्त्रारम्भे विरामे च यागहोमार्चनादिष्विति । शाठ्यायनः । यज्ञदानतपःस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदेवपित्र्यमन्त्रोच्चारणब्रह्मादीनि प्रणवमुच्चार्य प्रवर्त्तयेदिति । दाल्भ्यपरिशिष्टे च । ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च । अनोङ्कृत्य कृतं सर्वं न भवेत्सिद्धिकारकम् । तेन प्रतिमन्त्रं प्रणवोच्चारणं कर्त्तव्यम् । अत्र तु एकविनियोगे युक्तत्वान्मन्त्राणामादावेव प्रणवोच्चारणं कर्त्तव्यं न मध्येऽपि । अस्य पृथग्विधित्वान्मन्त्रेण सह न सन्धिः । पृथग्विधानेन सह सन्धिर्न भवतीत्युपपादितं त्विषिमान् ( ३. ३. ४.) इति सूत्रे कर्कोपाध्यायैः । एवमध्याहारस्यापि लौकिकत्वान्मन्त्रेण सह सन्ध्यभाव इत्यपि प्रतिपादितं सन्त इति प्रतिमन्त्रम् (६. ४. २ ) इति सूत्रे तैरेव ।

क्रतवो यज्ञाः नः अस्मान्प्रति आयन्तु आगच्छन्तु यज्ञकर्त्तारो वयं भवेमेत्यर्थः । कीदृशाः क्रतवः भद्राः कल्याणकारिणः । तथा विश्वतोऽदब्धासः सर्वतोऽनुपहिंसिताः निर्विघ्नाः । अपरीतासः न परीताः अज्ञाताः केन चित्, फलानुमेया इत्यर्थः । उद्भिदः उद्भेत्तारो यज्ञान्तराणां प्रकटीकर्त्तारः । यथा येन प्रकारेण देवा नोऽस्माकं सदमित् इदेवार्थे सदैव वृधे वृद्ध्यै असन् भवन्ति तथा क्रतव आयन्तु । कीदृशा देवाः अप्रायुवः । प्रकर्षेण आयुवन्ति प्रमाद्यन्तीति प्रायुवः तद्विपरीता अनलसाः । दिवेदिवे प्रत्यहं रक्षितारो भवन्तु ॥ १ ॥

---

देवाः स्वस्ति प्रकुर्वन्तु सगणाः सायुधास्तथा । किन्नरा देवगन्धर्वाः साप्सराः सविनायकाः ॥ १ ॥ कल्याणं च प्रकुर्वन्तु पातालस्थाः सुराः शुभाः । रसातले तु ये देवास्तलातलनिवासिनः ॥२॥ सुतले वितले देवा ह्य तले च तले पराः ।

सुमतिर्ऋजूयतां देवाना१ँ रातिरभिनो निवर्त्तताम् । देवाना१ँ सख्यमुपसेदिमा व्वयन्देवा न आयुः प्रतिरन्तु जीवसे ॥ २ ॥

तान्पूर्व्वया निविदा हूमहे व्वयं भगम्मित्रमदितिं दक्षमस्रिधम् । अर्य्यमणं वरुण१ँ सोममश्विना सरस्वती नः सुभगा मयस्करत् ॥ ३ ॥ तन्नो व्वातो मयोभु व्वातु

---

भद्रा कल्याणकारिणी देवानां सुमतिर्नोऽस्मान्प्रति निवर्त्ततामस्मद्-भिमुखीभवतु । कीदृशानां देवानां ऋजूयतां ऋजुमकुटिलं यजमानं कामयन्ते ऋजूयन्तस्तेषां, किञ्च देवानां रातिर्दानं नोऽस्मानभिनिवर्त्ततां देवा अस्मभ्यं ददत्वित्यर्थः । वयं देवानां सख्यं मैत्रीमुपसेदिम प्राप्नुयाम । देवा नोऽस्माकमायुर्जीवसे जीवितुं प्रतिरन्तु प्रवर्द्ध-यन्तु ॥ २ ॥

पूर्वया नित्यया वेदरूपया निविदा वाचा तान्देवान्हूमहे आह्व-यामः । तानेवाह भगं मित्रमदितिं दक्षमर्यमणं वरुणं सोममश्विना अश्विनौ । न स्रेधते च्योतते सोऽस्त्रित्तमस्रिधमच्युतसद्भावमिति

---

तान्सर्वान्प्रणमाम्यद्य स्वक्रतोः पालनाय वै ॥३॥ भूर्लोके ये स्थिता देवा भुवर्लोके च ये स्थिराः । भावुकं ते प्रकुर्वन्तु सगणाः सारसंयुताः ॥४॥ स्वर्लोकवासि-नस्सर्वे पुरन्दरमुखाः सुराः । तेभ्यः शमत्र वाञ्छामि कर्मारम्भे विशेषतः ॥ ५ ॥ महर्जनतपोलोके निवसन्ति सवाहनाः । निर्जरास्ते प्रकुर्वन्तु क्षेमं योग च शाश्वतम् ॥६॥ सत्यलोके प्रसीदन्ति ब्रह्माद्याश्शिखिवाहनाः । त्रिदशास्ते सुखासीना अभयं कुर्वतां सदा ॥ ७ ॥ रुद्रादिदेवतास्सर्वास्तथा वैकुण्ठवासिनः । परिवारै-र्गणैर्युक्ता भद्रं कुर्वन्तु नित्यशः ॥८॥ शिवयागे विष्णुयागे वास्तुकर्मणि सर्वदा । इष्टापूर्ते महादाने तान्देवान्स्संस्मरेच्चिरम् ॥ ९॥ ततस्तु कर्मारम्भः स्यान्निर्विघ्नेन विशेषतः । ये चैव न स्मरन्त्येतान् तेषां नैव फलम्भवेत् ॥१०॥

भेषजं तन्माता पृथिवी तत्पिता द्यौः। तद् ग्रावाणः सोमसुतो मयोभुवस्तदश्विना शृणुतं धिष्ण्या युवम् ॥४॥ तमीशानं जगतस्तस्थुषस्पतिं धियञ्जिन्वमवसे हूमहे व्वयम्। पूषा नो यथा व्वेदसामसद्वृधे रक्षिता पायुरदब्धः स्वस्तये ॥ ५ ॥ स्वस्ति न इन्द्रो व्वृद्धश्रवाः स्वस्ति नः पूषा व्विश्ववेदाः। स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्वस्ति नो बृहस्पतिर्दधातु ॥६॥ पृषदश्वा मरुतः पृश्निमातरः शु भं-

---

भगादीनां विशेषणम्। शोभनं भगं भाग्यं यस्याः सा सुभगा सरस्वती नोऽस्माकं मयः सुखं करत् करोतु ॥ ३ ॥ वातो नोऽस्माकं भेषजं यथा तथा वातु। कीदृशं भेषजं मयोभु मयः सुखं भवति यस्मात्तत्। माता जगन्निर्मात्री पृथिवी। पिता पालको द्यौर्द्युलोकं तद्धितं ददातु। मयोभुवः सुखस्य दातारः सोमं सुन्वन्ति ते सोमसुतः सोमाभिषवकारिणो ग्रावाणो दृषदस्तद्भेषजं ददतु। धिष्ण्या धिष्ण्यौ गृहवद्धारयितारौ हे अश्विना अश्विनौ युवं युवां तद्भेषजं शृणुतं दत्तमित्यर्थः ॥४॥
वयं तमीशानं रुद्रमवसे अवितुं तर्पयितुं हूमहे। कीदृशं जगतो जङ्गमस्य तस्थुषः स्थावरस्य च पतिं पालकं धियं जिन्वति प्रीणातीति धियञ्जिन्वस्तम्। यथा येन प्रकारेण पूषा नोऽस्माकं वृधे वृद्ध्यै स्वस्तये चासत् भवतु। कीदृशः पूषा वेदसां धनानां रक्षिता। पायुः पालकः पुत्रादीनाम्। अदब्धोऽनुपहिंसितः ॥ ५ ॥ इन्द्रो नोऽस्मभ्यं स्वस्ति दधातु। कीदृशः वृद्धश्रवाः वृद्धं महत् श्रवः कीर्त्तिर्यस्य सः। विश्वं वेत्तीति विश्ववेदाः पूषा नः स्वस्ति दधातु। अरिष्टा अनुपक्षीणा नेमिश्चक्रधारा यस्य स तार्क्ष्यो रथो गरुडो वा स्वस्ति दधातु,। बृहस्पतिर्नः स्वस्ति दधातु ॥ ६ ॥ पृषत्यः पृषतीसंज्ञा अश्वा येषां ते पृश्निर्द्यौर्माता येषां ते, शुभं यान्ति प्रापयन्ति वा ते, विदथेषु

य्यावानो व्विदथेषु जग्मयः । अग्निजिह्वा मनवः सूरचक्षसो व्विश्वे नो देवाऽअवसाऽऽगमन्निह ॥ ७ ॥

भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः । स्थिरैरङ्गैस्तुष्टुवा ꣳसस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ ८ ॥ शतमिन्नु शरदो अन्ति देवा यत्रा नश्चक्रा जरसं तनूनाम् । पुत्रासो यत्र पितरो भवन्ति मा नो मध्या रीरिषतायुर्गन्तोः ॥ ९ ॥ अदितिर्द्यौरदितिरन्तरिक्षमदितिर्माता स पिता स पुत्रः । विश्वे देवा अदितिः

---

यज्ञगृहेषु जग्मयो गमनशीलाः, अग्निर्जिह्वा येषां ते, हुताद इत्यर्थः । जानन्ति ते मनवः सर्वज्ञाः । सूरः सूर्यश्चक्षुर्येषां ते, मरुतो देवा विश्वे देवाश्च नोऽस्माकमवसाऽन्नेन हेतुना इह यज्ञे आगमन् आगच्छन्तु ॥ ७ ॥

हे देवाः कर्णेभिः कर्णैर्भद्रं कल्याणं वयं शृणुयाम, हे यजत्रा यजन्तं त्रायन्ते ते, यजमानरक्षका अक्षभिर्नेत्रैर्वयं भद्रं पश्येम । किं च देवहितं देवैर्हितं स्थापितं यदायुर्जीवनं तद् वयं व्यशेमहि व्यश्नुवीमहि प्राप्नुयाम । कीदृशा वयं स्थिरैर्दृढैरङ्गैः करचरणादिभिः तनूभिः शरीरैश्च पुत्रादिभिर्वा युताः । तथा तुष्टुवांसः भवतः स्तुवन्तः ॥ ८ ॥ हे देवाः शतमित् शतमेव शरदो वर्षाणि शतवर्षपर्यन्तं यूयमन्ति अन्तिके समीपे भवत । यत्र शरच्छते नोऽस्माकं तनूनां शरीराणां यूयं जरसं जरां चक्र कुरुथ । यत्रास्माकं जरायां पुत्रासोऽस्मत्पुत्राः पितरो भवन्ति । पुत्रवन्तो भवन्तीति यावत् । अस्माकं पौत्रा भवन्तीत्यर्थः । तावत् मध्या मध्ये नोऽस्माकमायुर्मा रीरिषत मा हिंसिष्ट । कीदृशमायुर्गन्तोः गन्तृ गमनशीलम् ॥ ९ ॥ द्यौः स्वर्गोऽदितिः तदधिष्ठात्रीत्वात् । अन्तरिक्षमदितिः । अदितिर्माता । पिता पुत्रश्च सः ।

पञ्चजनाऽअदितिर्जातमदितिर्जनित्वम् ॥ १० ॥ द्यौः शान्तिरन्तरिक्षꣳ शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्तिः । र्व्वनस्पतयः शान्तिर्व्विश्वे देवाः शान्तिर्ब्रह्म शान्तिः सर्व्वꣳ शान्तिः शान्तिरेव शान्तिः सा मा शान्तिरेधि ॥ ११ ॥ यतोयतः समीहसे ततो नोऽअभयं कुरु । शन्नः कुरु प्प्रजाभ्योऽभयं नः पशुभ्यः ॥ १२ ॥ सुशान्तिर्भवतु । लक्ष्मीनारायणाभ्यां नमः । उमामहेश्वराभ्यां न० । वाणीहिरण्यगर्भाभ्यां न० । शचीपुरन्दराभ्यां न० । मातृपितृचरणकमलेभ्यो न० । इष्टदेवताभ्यो न० । कुलदेवताभ्यो न० । गुरुभ्यो न० । ग्रामदेवताभ्यो न० । स्थानदेवताभ्यो न० । वास्तु

---

अदितिरेव विश्वे सर्वे देवाः । पञ्चजना मनुष्या अप्यदितिः । जातमुत्पन्नं प्राणिजातं जनित्वं जनिष्यमाणं च सर्वमदितिरेव * । ( २५।१४–२३ ) ॥ १० ॥ द्युलोकरूपा या शान्तिः एवं अन्तरिक्षरूपा या शान्तिः पृथिवी रूपा या शान्तिः आपो जलरूपा या शान्तिः ओषधय ओषधिरूपा या शान्तिः वनस्पतिरूपा या शान्तिः सर्वदेवरूपा या शान्तिः ब्रह्मरूपा या शान्तिः सर्वं जगद्रूपा या शान्तिः शान्तिरेव शान्तिर्या स्वरूपतः शान्तिः सा शान्तिर्मामां प्रत्येधि अस्तु । पुरुषव्यत्ययश्छान्दसः । ३६–१७ ॥ हे परमात्मन् यतोयतो यस्माद्यस्माद्दुश्चरितात् अस्मास्वपकर्त्तुं त्वं समीहसे । ततस्ततो नोऽस्माकमभयं कुरु । किञ्च नोऽस्माकं प्रजाभ्यः शं कुरु। नोऽस्माकं पशुभ्योऽभयं भीत्य-

---

* यद्वा अदितिर्मन्त्रेण नोच्यते । द्यौरित्यादीनि सर्वाणि जनित्वान्तानि अदितिरदीनानि महाभाग्ययुक्तानि सन्तु ।

देवताभ्यो० । सर्वेभ्यो देवभ्यो० सर्वेभ्यो ब्राह्मणेभ्यो० । सिद्धिबुद्धिसहिताय श्रीमन्महागणाधिपतये नमः । सुमुखश्चैकदन्तश्च कपिलो गजकर्णकः । लंबोदरश्च विकटो विघ्ननाशो विनायकः ॥१॥ धूम्रकेतुर्गणाध्यक्षो भालचन्द्रो गजाननः । द्वादशैतानि नामानि यः पठेच्छृणुयादपि ॥२॥ विद्यारम्भे विवाहे च प्रवेशे निर्गमे तथा । सङ्ग्रामे सङ्कटे चैव विघ्नस्तस्य न जायते ॥ ३ ॥ शुक्लाम्बरधरं देवं शशिवर्णं चतुर्भुजम् । प्रसन्नवदनं ध्यायेत्सर्वविघ्नोपशान्तये ॥ ४ ॥ अभीप्सितार्थसिद्ध्यर्थं पूजितो यः सुरासुरैः । सर्वविघ्नहरस्तस्मै गणाधिपतये नमः ॥ ५ ॥ सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके । शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तुते ॥ ६ ॥ सर्वदा सर्वकार्येषु नास्ति तेषाममङ्गलम् । येषां हृदिस्थो भगवान् मङ्गलायतनं

---

भावं कुरु ( ३६-२२ )सुशान्तिरिति अत्र ह्रस्तस्वरं प्रयुञ्जाना मूर्खत्वादुपेक्ष्या एव ।

लक्ष्मीनारायणेति । नारायणं नमस्कृत्य सर्वकर्माणि कारयेत् । गणाधिपं गुरुं स्मृत्वा कुलपूजितदेवताम् इष्टमन्यत्ततो देशकालौ स्मृत्वैकमानस इति संस्कारभास्करे । कारयेदिति स्वार्थे णिच् । अत्र नारायणग्रहणमुमामहेश्वराद्युपलक्षणार्थं तेन महेश्वरादीन् सर्वानपि सम्प्रदायागतान्नमेदित्यर्थः । अत्र प्रतिवाक्यं प्रणवोच्चारणमप्रामाणिकम् । सुमुखश्चेत्यादिपाठोऽपि मङ्गलार्थः । मङ्गलायतनमिति । ल्युडन्तस्य नियतनपुंसकत्वात् । मङ्गलायतनो हरिरिति पाठस्तु ल्युप्रत्ययेन कथंचित्साधनीयो बहुव्रीहिणा वेति ।

हरिः॥७॥तदेव लग्नं सुदिनं तदेव ताराबलं चन्द्रबलं तदेव। विद्याबलं दैवबलं तदेव लक्ष्मीपते तेऽङ्घ्रियुगं स्मरामि ॥८॥ लाभस्तेषां जयस्तेषां कुतस्तेषां पराजयः । येषामिन्दीवर-श्यामो हृदयस्थो जनार्दनः ॥ ९ ॥ यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्द्धरः । तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्म-तिर्मम ॥ १० ॥ अनन्यांश्चिन्तयन्तो मां ये जनाः पर्युपा-सते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ॥११॥ स्मृते सकलकल्याणभाजनं यत्र जायते। पुरुषं तमजं नित्यं व्रजामि शरणं हरिम् ॥ १२ ॥ सर्वेष्वारम्भकार्येषु त्रयस्त्रिभुवनेश्वराः । देवा दिशन्तु नः सिद्धिं ब्रह्मेशान-जनार्दनाः ॥ १३ ॥ विश्वेशं माधवं ढुण्ढिं दण्डपाणिं च भैरवम् । वन्दे काशीं गुहां गङ्गां भवानीं मणिक-र्णिकाम् ॥ १४ ॥

ततो दक्षिणहस्तेऽर्घपात्रे कुशत्रयकुसुमयवफलद्रव्यज-

---

अर्घपात्रे इति । गृहीत्वौदुंबरं पात्रं वारिपूर्णं गुणान्वितम् । दर्भत्रयं साग्रमूलं फलपुष्पसमन्वितमिति पुरश्चर्यार्णवे । गुणशब्देनात्र हिरण्यादि द्रव्यं विवक्षितम् । तत्रैव । वदित्वेत्थं ताम्रपात्रे कृत्वा कुश-यवाक्षतान् । उदङ्मुखस्तु सङ्कल्पं कुर्यात्संवत्सरादिकान् । ब्रूयादिति शेषः । सङ्कल्पमिति । क्रियमाणकर्मादौ निमित्तोल्लेखपूर्वकः करिष्ये होष्ये यक्ष्ये इत्यादिपदोच्चारणसमकालीनदक्षिणहस्तकरणकपात्राधि-करणकजलादिप्रक्षेपसहितकरिष्यमाणकर्मानुष्ठानप्रतिज्ञा मानसं कर्म सङ्कल्प इत्युच्यते । अयं च कर्मादावावश्यकः । सङ्कल्पेन विना विप्र यत्किञ्चित्कुरुते नरः । फलं चाप्यल्पकं तस्य धर्मस्यार्द्धक्षयो भवे-

लादीन्यादाय सङ्कल्पं कुर्यात् । विष्णुर्विष्णुर्विष्णुः । श्रीमद्भगवतो महापुरुषस्य विष्णोराज्ञया प्रवर्त्तमानस्य * अद्य श्रीब्रह्मणोऽह्नि द्वितीयप्रहरार्द्धे श्रीश्वेतवाराहकल्पे वैवस्वतमन्वन्तरे अष्टाविंशतितमे कलियुगे कलिप्रथम चरणे जम्बूद्वीपे (भरतखण्डे) भारते वर्षे कुमारिकाखण्डे

---

दिति वाक्यात् । विष्णुरिति । प्रारम्भे कर्मणां विप्र पुण्डरीकं स्मरेद्धरिम् , नारायणं नमस्कृत्य सर्वकर्माणि कारयेदित्यादिस्मृतेर्विष्णु-पदोच्चारणम् । त्रिरुक्तिस्तु आदरार्था । अभ्यासे भूयांसमर्थं मन्यन्ते इति यास्कोक्तेः। श्रुतिरपि १.३.५.६ । त्रिवृत्प्रायणा हि यज्ञास्त्रिवृदु-दयना इति । यज्ञो वै विष्णुरिति च । १.१.३.१ अत एव कर्मान्तेऽपि विष्णवे नम इति त्रिवारमभिधीयते साम्प्रदायिकैः । श्रीमद्भगवत इति । इदं सङ्कल्पवाक्यं हेमाद्रौ श्राद्धखण्डे प्रदर्शितम् । भारते वर्षे इति । मार्कण्डेयः । भगवन्कथितस्त्वेष जम्बूद्वीपः समासतः । योजनानां सहस्रं वै द्वीपोऽयं दक्षिणोत्तरात् । पूर्वे किराताः कथिताः पश्चिमे यवनाः स्मृताः । दक्षिणे मलयो यस्य हिमवानुत्तरेण च । तदेतद्भारतं वर्षं सर्वबीजं द्विजोत्तम इति । अत्र भारतखण्डे इति पदमधिकं प्रयुञ्जते तदधिकमेवैकार्थत्वात् । कुमारिकाखण्डे इति । एतत्स्वरूपं

---

* ग्रहणादिनिमित्तस्य मासपक्षतिथीनां प्रयागादेश्च देशविशेषमात्रस्योल्लेखः कार्यो न तु व्यापकानामुत्तरायणादीनां श्रीमद्भगवत इत्यादीनां चेति केचित् । तन्न । प्रयागादिषु तीर्थेषु पुण्येष्वायतनेषु चेति मात्स्यवाक्यात्प्रयागा-दितीर्थविशेषस्य यथाऽङ्गत्वमेवमार्यावर्त्तः पुण्यभूमिर्मध्य विन्ध्यहिमागयोरि-त्यादिवाक्येनार्यावर्त्तादिसामान्यस्याऽप्यङ्गत्वावगमात् । मासपक्षतिथीनां च निमित्तानां च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेदित्यत्र सर्वश इति पदस्वारस्याच्च सर्वनिमित्तानामुल्लेखः । न चानेनैव सिद्धेर्मासपक्ष-

आर्यावर्त्तैकदेशे अविमुक्तवाराणसीक्षेत्रे महाश्मशाने आनन्दवने गौरीमुखे त्रिकण्टकविराजिते भागीरथ्याः पश्चिमे

---

मात्स्ये अ० ११४। भारतस्यास्य वर्षस्य नव भेदान्निबोधत। इन्द्रद्वीपः कुशेरुश्च ताम्रपर्णो गभस्तिमान् । नागद्वीपस्तथा सौम्यो गान्धर्वस्त्वथ वारुणः। अयं तु नवमस्तेषां द्वीपः सागरसंवृतः। योजनानां सहस्रं तु द्वीपोऽयं दक्षिणोत्तरः। आयतस्तु कुमारीतो गङ्गायाः प्रभवावधि। तिर्यगूर्ध्वं तु विस्तीर्णः सहस्राणि दशैव तु इति। अत्रैव वर्णव्यवस्थेत्युक्तं सिद्धान्तशिरोमणौ। ऐन्द्रं कुशेरुकलशं किल ताम्रपर्णमन्यद्गभस्तिमदतश्च कुमारिकाख्यम् । नागं च सौम्यमिह वारुणमन्त्यखण्डं गान्धर्वसंज्ञमिति भारतवर्षमध्ये । वर्णव्यवस्थितिरिहैव कुमारिकाख्ये शेषेषु चान्त्यजजना निवसन्ति सर्वे इति। आर्यावर्त्तेति। विष्णुपुराणे। उत्तरं यत्समुद्रस्य हेमाद्रेश्चैव दक्षिणम्। वर्षं तद्भारतं नाम भारती यत्र सन्ततिः। आसमुद्रात्तु वै पूर्वादासमुद्रात्तु पश्चिमात्। तयोरेवान्तरं गिर्योरार्यावर्त्तं विदुर्बुधा इति। अविमुक्तेति। विश्वेश्वरेण विमुक्तं न भवतीत्यविमुक्तम्। वाराणसीति। वरानसो गङ्गाया अदूरभवत्वाद्वाराणसी। महाश्मशानेति। लिङ्गदेहस्यापि विश्वेश्वरप्रासादाद्दाहान्महाश्मशानम्। आनन्देति। सच्चिदानन्दस्वरूपमुक्त्याविर्भावादानन्दवनम्। गौरीमुखेति। विरहोन्मादेन मृतसतीदेहं गृहीत्वा सञ्चरतो महादेवस्य हस्ताद्विष्णुबाणेन विमुक्तं सतीमुखं केदारसन्निधावस्मिन्क्षेत्रे

---

तिथीनामित्यनर्थकमिति वाच्यम् । विधिस्पृष्टानां कार्त्तिकमाघादीनामुल्लेख सिद्धावपि तदस्पृष्टसाधारणमासाद्युल्लेखप्राप्त्यर्थत्वात् । अन्यथा अविहितमासादिके आधानादौ ज्योतिष्टोमे एकादशीव्रतादौ च मासपक्षतिथीनामुल्लेखाभावप्रसङ्गः स्यात्। एतेन तेन रूपेण प्रयोगाङ्गतया विहितानामेव मासादीनामुल्लेख इत्यपि परास्तम् ।

तीरे विक्रमशके बौद्धावतारे अमुकनाम्नि संवत्सरे अमुकायने अमुकऋतौ ओं तत्सदद्य महामाङ्गल्यप्रदमासोत्तमे मासे अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमु-

---

पपातेति गौरीमुखम्। त्रिकण्टकेति। अविमुक्तं च स्वर्लीनं तथा मध्यमकं पदम्। एतत्त्रिकण्टकं देवि मृत्युकालेऽमृतप्रदमिति लिङ्गपुराणोक्तम्। अविमुक्तेश्वरलिङ्गं स्वर्लीनं त्रिविष्टपलिङ्गं त्रिलोचन इति प्रसिद्धं मध्यमेश्वरलिङ्गं चेति त्रिकण्टकसंज्ञम्। कलिः कालः कृतं कर्म त्रिकण्टकमितीरितमिति कौमौक्तकण्टकत्रयनाशकं वा तेन विराजितमिदं क्षेत्रम्। संवत्सरे इति। संवत्सरायने ऋतुर्मासपक्षपञ्चाङ्गमेव च। नवग्रहस्थितिं घस्रभागं मौहूर्त्तिकं त्विति। स्वदेशभेदांस्तत्रत्यान् कामनासहितान्वदेत्। द्वीपेऽमुकेऽमुके खण्डेऽमुके वर्षे च नीवृतीति। अब्दायनर्त्तुमासाश्च पक्षतिथ्यर्क्षवासराः। योगश्च करणं चेति सङ्कल्पोऽयमुदाहृतः। अन्यत्रापि। सङ्कीर्त्य मासपक्षादीन्निमित्तानि तथैव च। इदं कर्म करिष्येऽहमिति सङ्कल्पमाचरेत्।

तत्सदद्येति। प्रणवं तत्सदद्येति मासपक्षतिथीरपीति। अमुकतिथाविति। अनेकदिनसाध्ये कर्मणि प्रयोगाधिकरणभूताः सर्वा मासपक्षतिथय उल्लेख्या न प्रारम्भदिनमात्रस्य। यत्तु आद्यदिनसङ्कल्पकालीनां तिथिमधिकरणत्वेनोल्लिख्य ज्योतिष्टोमेनाहं यक्ष्ये महारुद्रहोमं करिष्ये इत्यादिसङ्कल्पवाक्यं प्रयुञ्जते याज्ञुकास्तत्पदानामन्वयायोगादनादर्त्तव्यमिति दिनकरः। साम्प्रदायिकास्तु नैतत्स्वीकुर्वते। तदुक्तं संस्काररत्नमालायाम्। यावन्ति कर्मसंबद्धान्यृक्षाणि स्युस्तु तावताम्। वारादीनामपि तथा युक्तं सर्वत्र कीर्त्तनम्। केन चित्तु नवीनेन प्रोक्तमेतत्तु युक्तितः। प्रायोगिकास्त्वेकभादेरेव कुर्वन्ति कीर्त्तनमिति। वासरे इति। अत्रामुकवासरान्वितायामिति प्रयोगोऽसमीचीनः। उक्तवाक्यैर्वारादीनामपि

कनक्षत्रे अमुकयोगे अमुककरणे अमुकराशिस्थिते चन्द्रे अमुक राशिस्थिते सूर्ये अमुकराशिस्थिते देवगुरौ शेषेषु ग्रहेषु यथास्थानस्थितेषु एवं ग्रहगुणविशेषणविशिष्टायां शुभपुण्यतिथौ अमुकगोत्रोऽमुकशर्मा आसु मूर्त्तिषु लिङ्गे च देवकलासान्निध्यार्थं मम सभार्यस्य सपरिवारस्य सकलपापक्षयपूर्वकं पितृतो[1] मातृतश्च दश पूर्वान्दशापरानात्मानं चोद्धर्तुकामनया क्षेम[2]स्थैर्यदीर्घायुरारोग्यैश्वर्य स्थिरलक्ष्मीपुत्रपौत्रधनधान्यगजाश्वरथगोमहिष्यादिसम्पद् भिवृद्धिपूर्वकनिरतिशयसानन्दब्रह्मपदप्राप्ति श्रीसर्वफला-

---

मासपल्लवत् प्राधान्येन विधानात्। तस्मादमुकवासरे इत्यादीनि पदानि पृथक् पृथक् सप्तम्यन्तान्येवोच्चारणीयानि। अमुकशर्मेति। अव्युत्पन्नोऽयमदःशब्दपर्यायः। पुरश्चर्यार्णवे। अमुके चामुक क्षेत्रे गोत्रप्रवरमुच्चरेत्। स्वनामजातिनामानि द्विजाच्छर्म च वर्म च। गुप्तो दासोऽथामुकस्य मन्त्रस्य सिद्धिकामुकः। अद्यारभ्य दिनैरेतै

---

१ दश पूर्वान्परान्वंश्यानात्मानं चैकमेव च। प्रापयेदस्य सालोक्यं देवस्य स्थापको नरः। लभते स तु दीर्घायुः पुत्रपौत्रधनान्वित इति हेमाद्रौ।

२ एतानि फलानि काशीखण्डे लैङ्गे पाद्मे देवीभागवतादौ चोक्तानि। तत्र फलकामनायां समुच्चयबोधकपदाभावेन योगसिद्ध्यधिकरणन्यायेनैकस्यैव फलस्योल्लेखः। न चैकवाक्योपात्तत्वेन खलेकपोतन्यायेन युगपदुपस्थितेरन्यतरेण नैराकाङ्क्ष्याभावान्नेदं फलपरं किन्तु स्तुतिमात्रमिति वाच्यम्। प्रतिष्ठादिविधिविधेयभावनाया भाव्याकाङ्क्षायां स्तुत्यर्थोपात्तस्यापि फलत्वकल्पनायां लाघवात्। अत एव सूत्रयामास कात्यायनः। फलयुक्तानि कर्माणि १. १. २. इति। निष्कामैस्तु फलमात्रं नोच्चारणीयं सर्वं वोच्चारणीयमित्याहुः।

क्षय्यसुखकामः श्रुतिस्मृतिपुराणोक्तफलावाप्तिकामश्च धर्मार्थकाममोक्षचतुर्विधपुरुषार्थसिद्धिद्वारा श्रीपरमेश्वर प्रीत्यर्थं ग्रहयज्ञवास्तुयागपूर्विकां स्वकृतशैलप्रासादप्रतिष्ठासहितां परिवारवाहनादियुतामेकरात्राधिवासनपक्षेण-विष्ण्वादिमूर्त्तीनां लिङ्गस्य च अचलप्रतिष्ठां पञ्चाहे चतुरहे वा करिष्ये ।

---

रसति प्रतिबन्धके । करिष्य इति सङ्कल्पं मनसैव प्रकल्पयेदिति । परमेश्वरेति । प्रीणातु भगवानीश· कर्मणाऽनेन शाश्वतः । करोत्येवं सदा बुद्ध्या कर्मार्पणमिदं स्मृतिमिति, यत्करोषि यदश्नासीत्यादिना च सर्वकर्मणां परमेश्वरप्रीत्यर्थत्वावगतेः । ग्रहयज्ञेति । ग्रहताराबलं ग्रहपूजां विधाय चेति मात्स्यात् । वास्तुयागेति । मात्स्ये । जीर्णोद्धारे तथोद्याने तथा गृहनिवेशने । नवप्रासादभवने प्रासादपरिवर्त्तने । द्वाराभिवर्त्तने तद्वत्प्रासादेषु गृहेषु च । वास्तूपशमनं कुर्यात्पूर्वमेव विचक्षण इति । प्रासादेति । मात्स्ये तडागविधिमुक्त्वा "एष एव विधिर्दृष्टः प्रतिष्ठासु तथैव च । मन्त्रतस्तु विशेषः स्यात्प्रासादोद्यानभूमिषु" इत्युक्तेः सप्रासादप्रतिष्ठायां प्रासादेति पदोच्चारणाद्येवाधिकं नान्यो विशेष इति बोध्यम् । एकरात्राधिवासनेति । संस्कारो गन्धमाल्याद्यैर्यः स्यात्तदधिवासनमित्यमरः । अधिवास्यन्ते देवा अस्मिन्निति व्युत्पत्त्या अधिवासनशब्दः कर्मविशेषे रूढः । तत्र यद्यपि जलाधिवासोऽन्नाधिवास इत्यादयोऽनेकेऽधिवासाः सन्ति तथापि शय्याधिवासस्यैवात्र ग्रहणमिति वक्ष्यते ।

करिष्ये इति । कर्तृगामिक्रियाफलाभावे तु करिष्यामि यक्ष्यामि होष्यामीत्यादिप्रयोगः । श्रौते तु अध्वर्युकर्तृकेऽप्यग्न्यन्वाधानादौ दर्शपौर्णमासाभ्यामहं यक्ष्ये इत्यात्मनेपदमेव पठन्ति तद्विचारणीयम् ।

**तदङ्गत्वेन स्वस्तिपुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूजनमायुष्यमन्त्रजपं नान्दीश्राद्धमाचार्यादिवरणं च करिष्ये।**

---

तदङ्गत्वेनेति। स्मार्त्तकर्मस्वङ्गानां पृथक् सङ्कल्पे आचार एव प्रमाणं अङ्गानां परोपजीवनेन प्रधानसङ्कल्पेनैव तेषां सङ्कल्पसिद्धेः। अत एव याज्ञिकाः श्रौतकर्मस्वङ्गसङ्कल्पं पृथक् नैवाचरन्ति। अत्र सङ्कल्पो द्विविधः। अन्तरङ्गो बहिरङ्गश्च। तत्र पुण्याहवाचनादीनां प्रधानप्रयोगान्तः पातिगुणत्वादमुककर्म करिष्ये तदङ्गत्वेन पुण्याहवाचनादीनि करिष्ये इत्येवं प्रधानसङ्कल्पोत्तरमेषां सङ्कल्पोऽन्तरङ्गसङ्कल्प इत्येकः पक्षः। दर्शपूर्णमासामासावारप्स्यमानोऽन्वारम्भणीयेष्ट्या यक्ष्ये वाजपेयेन यक्ष्यमाणो बृहस्पतिसवेन यक्ष्ये इतिवत्करिष्यमाणामुककर्माङ्गत्वेन पुण्याहवाचनादीनि करिष्ये इति सङ्कल्प्य तानि कृत्वा ततोऽमुकमतिष्ठां करिष्ये इति प्रधानसङ्कल्पो बहिरङ्ग सङ्कल्प इति द्वितीयः पक्षः। अथवा सर्वेषां क्रमेण पृथक् पृथक् सङ्कल्प इति तृतीयमपि पक्षं शिष्टा आचरन्ति। तत्र स्मार्त्तकर्मस्वन्तरङ्गसङ्कल्पः श्रौतकर्मसु बहिरङ्गसङ्कल्प इति साम्प्रदायिकानां व्यवस्थेति।

तत्रादाविति। एतच्च सर्वकर्मस्वादौ कर्त्तव्यं निर्विघ्नार्थत्वात्। न ऋते त्वत्क्रियत इति (ऋ॰१०।१०।११२।६) मन्त्रलिङ्गाच्च। सर्वकर्मसमृद्ध्यर्थमादौ पूज्यो विनायक इति लैङ्गात्, नार्चितो हि गणाध्यक्षो यज्ञादौ यत्सुरोत्तमाः। तस्माद्विघ्नं समुत्पन्नमाकस्मिकमिदं खल्विति पाद्माच्च। अम्बिकापूजनं सम्प्रदायानुरोधेन। देवीपुराणेऽपि। सर्वं जगद्वशीकुर्यान्महागणपतिः सदा। स्वर्गापवर्गसंसिद्धिर्दुर्गायागात्प्रजायते इति। रुद्रकल्पद्रुमादावम्बिकापूजनस्यानुक्ततया एकस्य गणेशस्यैव पूजनपक्षे एकवचनान्तेन सङ्कल्पः कार्यः। अथवा गणपतिपूजनं कृत्वाऽम्बिकापूजनं विधेयम्। न चाम्बिकापूजनाभावपक्षे

तत्रादौ निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोः पूजनं च करिष्ये । ततोऽरुणाक्षतैरष्टदले प्रतिमादिषु गणेशाम्बिके आवाहयेत् । हे हेरम्ब त्वमेह्येहि अम्बिकात्र्यम्बकात्मज । सिद्धिबुद्धिपते त्र्यक्ष लक्षलाभकयोः पितः॥१॥ नागास्य नागहार त्वं गणराज चतुर्भुज । भूषितः स्वायुधैर्दिव्यैः पाशाङ्कुशपरश्वधैः ॥ २ ॥ आवाहयामि पूजार्थं रक्षार्थं च मम क्रतोः । इहागत्य गृहाण त्वं पूजां, यागं च रक्ष मे ॥ ३ ॥ [१] ॐ गणानां त्वा गणपतिꣳ०

यत्र पुण्याहवाचनादि नोक्तं तत्र गणपतिमातृपूजनयोर्मध्ये व्यवधानाभावेन सप्तदश प्राजापत्यानितिवत्तन्त्रेण गणपतिपूजा स्यादिति वाच्यम् । निर्विघ्नफलसिद्ध्यर्थाया गणपतिपूजायाः पुरुषार्थत्वेन मातृपूजाङ्गभूतायाः कर्मार्थत्वेन च फलभेदात् । प्राजापत्येषु तु फलैक्याद्देशकालकर्त्रैक्याच्च तन्त्रता । तथा च कात्यायनः अ. १. ७. १–३ कर्मणां युगपद्भावस्तन्त्रं फलकर्मदेशकालद्रव्यदेवतागुणसामान्ये तद्भेदे भेदः । गणेशाम्बिकयोरिति । गणेशशब्दस्याभ्यर्हितत्वात्पूर्वनिपातः । अरुणाक्षतैरिति । परशुरामः । गणेशं पूजयेत्पूर्वं निर्विघ्नार्थं स्वकर्मणः । पट्टे वा मृण्मये पीठे रक्तवस्त्रेऽरुणाक्षतैः । कार्यमष्टदलं पद्मं, तस्योपरि गणेश्वरम् । गणानान्त्वेति संस्थाप्य, पूजयेत्तदनन्तरम् । प्रतिमादिष्विति । प्रतिमासु च शुभ्रासु लिखित्वा वा पटा-

(१) हे मम वसो सर्वस्वभूत गणपते वयं त्वा त्वां हवामहे आह्वयामः । कीदृशं त्वां गणानां रुद्रपारिषदानां मध्ये गणपतिं गणरूपेण पालकं प्रियाणां वल्लभानां भार्यादीनां मध्ये प्रियपतिं प्रियस्य पालकं निधीनां सुखनिधीनां मध्ये निधिपतिं सुखनिधेः पालकम् । हे गणपते गर्भं दधातीति गर्भधं गर्भधारकं रेतः अहं आ अजानि आकृष्य क्षिपाणि । त्वं च गर्भधं रेतः आ अजासि आकृष्य अज क्षिप प्रेरयेत्यर्थः ।

हवामहे प्रियाणां त्वा प्रियपतिꣳ हवामहे निधीनां त्वा निधिपतिꣳ हवामहे वसो मम। आहमजानि गर्भध-मात्त्वमजासि गर्भधम्।

ॐ भूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि

---

दिषु। अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथक् पृथक्। हे हेरम्बेति। अयं सर्वोऽपि पूजाप्रकारः परशुरामकृतमहारुद्रकारिकायामस्ति। गणानां त्वेति। प्रकरणानुरोधान्महीधरादिभिरश्वपरतया व्याख्यातोऽप्ययं मन्त्रः स्मृत्या गणपतिपूजने विनियुक्तो गणपतिपरतया व्याख्यायते। एवं शन्नो देवीः, त्वां गन्धर्वाः, अक्षन्नमीमदन्तेत्यादीनामपि शनि-पूजाद्युपयोगित्वम्। अन्यार्थानामपि मन्त्राणां वचनात्त्वयथार्थमैन्द्री स्यादिति न्यायेन विनियोग इति संस्कारचिन्तामणौ। आग्नेये। मन्त्रैर्वैष्णवरौद्रैस्तु सावित्रैः शान्तिकैस्तथा। विष्णुं प्रजापतिं वाऽपि शिवं वा भास्करं तथा। तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वदेवान् समाहितः। कौर्मे। ब्रह्माणं शङ्करं सूर्यं तथैव मधुसूदनम्। अन्यांश्चाभिमतान्दे-वान् तल्लिङ्गैरर्चयेन्नरः। स्नानसूत्रे कात्यायनोऽपि। ब्राह्मवैष्णव-रौद्रसावित्रमैत्रवारुणैस्तत्तल्लिङ्गैरर्चयेदिति। अत्र ब्राह्मेत्यादिना देव-तातद्धितेन तल्लिङ्गत्वे प्राप्ते पुनस्तल्लिङ्गैरिति ग्रहणं श्रुतिलिङ्गवाक्य प्रकरणस्थानसमाख्याभिर्मन्त्राद्यङ्गविनियोगो भवति सर्वत्र, अत्र तु लिङ्गमेव विनियोजकं येषां ते ग्राह्या इत्यर्थकं तेन तत्तल्लिङ्गमन्त्रपदेन यथाकथञ्चिदपि तत्तद्देवताद्रव्याद्यनुस्मारकपदघटितमन्त्रपरिग्रहः कार्य इति सिद्ध्यति।

आवाहयामीति। हस्ताभ्यामञ्जलिं बध्वाऽनामिकामूलपर्व-णि। अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता। अधोमुखी त्वियं चैव स्थापनीति निगद्यते। आकर्मकाण्डपर्यन्तं सान्निध्यं हि विभाव-येत्। ततः संस्थापनं कुर्यादिह तिष्ठेह तिष्ठ चेति पुरश्चर्यार्णवे। एते-नावाहनस्थापनयोर्भेदः स्पष्ट एवोक्तः।

स्थापयामि इत्यावाह्य तदुत्तरतोऽम्बिकां स्थापयेत् । हेमाद्रितनयां देवीं वरदां भैरवप्रियाम् । लंबोदरस्य जननीं गौरीमावाहयाम्यम् । ॐ अम्बेऽअम्बिकेऽम्बालिके न मानयति कश्चन । ससस्त्यश्वकः सुभद्रिकां काम्पीलवासिनीम् ॐ भूर्भुवः स्वः गौर्यै नमः गौरीमावाहयामि स्थापयामि । ॐ मनो जूतिर्जुषतामाज्यस्य बृहस्पतिर्यज्ञमिमं तनोत्वरिष्टं यज्ञꣳ समिमं दधातु । विश्वे देवासऽइह मादयन्तामों ३ प्रतिष्ठ । गणेशाम्बिके सुप्रतिष्ठिते वरदे भवताम् । इत्यक्षतैस्तन्त्रेण प्रतिष्ठाप्य प्रत्येकं सह वा

---

तदुत्तरत इति । प्राक्संस्थं कर्म देवानामुदग्दिगपवर्गकम् । उदग्दिक्संस्थमथवा प्राचीदिगपवर्गकमिति वचनात् । सर्वेषु धर्मकार्येष्विति तु नोपतिष्ठते । तस्य पूजकविषयत्वादम्बिकायाः पत्नीत्वा-

---

१ हे अम्बे हे अम्बिके हे अम्बालिके कश्चन नरः मा मां ( स्वामिनं प्रति ) न नयति । अश्वकः कुत्सितः स्वामी काम्पीले नगरे वसतीति तां ( तत्र हि सुरूपाः कामिन्यो भवन्ति ) सुभद्रिकां नारीं समादाय शेते मदगमने स्वामी सुभद्रिकासक्तो भविष्यति इति मया गम्यते न तु मां कश्चिन्नयति । मया पूजिता भगवती स्वामिनोऽन्यासक्तिं निवर्त्तयतु स्वामिनं मदभिमुखं च करोत्विति प्रार्थना वाक्यार्थः । अश्वशब्दः स्वामिवचनः कुत्सायां कप्रत्ययः । अकुत्सितोऽपीर्ष्यया कुत्स्यते ।

२ जूतिर्गन्तृ मन आज्यस्य ( स्वमशं ) जुषतां सेवताम् । बृहस्पतिर्यज्ञमिमं तनोतु । अरिष्टमविनष्टं यज्ञमिमं कृत्वा संदधातु । विश्वे देवासो देवा इह यज्ञे मादयन्तां तृप्यन्ताम् । ओमित्यङ्गीकारे हे देव मदभीष्टसर्वसम्पत्यर्थं त्वमस्मिन् स्थाने प्रकर्षेण तिष्ठ इति प्रार्थना वाक्यार्थः ।

**पूजयेत् गणेशाम्बिकाभ्यां न० आसनार्थे अक्षतान् समर्पयामि।**

---

भावाद्य। पूजयेदिति। अत्र पूजा द्विविधा षोडशोपचारा पञ्चोपचारा वा। तत्र प्रतिष्ठितप्रतिमादावावाहनविसर्जनयोरभावेन चतुर्दशोपचारैव। अथवाऽऽवाहनविसर्जनस्थाने ध्यानमन्त्रपुष्पाञ्जलिदानं तेन षोडशोपचारा भवति। नूतनप्रतिमायां तु षोडशोपचारैव। आवाहनाभावे प्रतिमादौ पूजाया असम्भवात्। पञ्चोपचारपूजा तु यत्र स्थापितदेवानां विसर्जनात्प्राक् पूजोक्ता तद्विषया। ईदृश्येव चेयं पूजा वचनत्याजितकिञ्चित्पदार्था पिण्डरहितसङ्क्रान्तिश्राद्धवत्स्वतन्त्राऽपि। अत्र पूजा नाम देवतोद्देशेन द्रव्यत्यागाद्याग एव। तत्र यद्यपि केषां चिदावाहनादीनामयागात्मकत्वात्पूजात्वं न स्यात्। न च तेषां पूजात्वं नास्त्येवेति वाच्यम्। षोडशस्वप्युपचारेषु शास्त्रकाराणां पूजाशब्दप्रयोगात्। तथापि यागायागसमुदाये पूजाशब्दो गौरवितप्रीतिहेतुक्रियात्वेनोपाधिना रूढ एव। यथा इष्टिपशुसोमसमुदाये राजसूयशब्दः। यद्यपि ईश्वरे यागायागसमुदाय क्रियया जीववदन्तःकरणवृत्तिरूपा प्रीतिर्नोत्पद्यते अन्तःकरणाभावात्। तथापि मायावृत्तिविशेष एव प्रीतिः शिक्षादिवत्। सा च यद्यप्युत्पन्नत्वान्नश्यति तथापि फलं यावत्तिष्ठति अपूर्ववदिति वीरमित्रोदये।

गणेशाम्बिकाभ्यां नम इति। ङेऽन्तं नमोऽन्तं तन्नाम पूजनादौ प्रयोजयेदिति तन्त्रवचनात्सर्वत्र नमोऽन्तं देवनामोच्चारणीयम्। आसनार्थे इति। देवस्य वामभागे तु दद्यान्मूलेन चासनम्। पौष्पं

---

१ विष्णुपुराणे। आवाहनासने पाद्यमर्घ्यमाचमनीयकम्। स्नानं वस्त्रोपवीतं च गन्धमाल्यान्यनुक्रमात्। धूपो दीपश्च नैवेद्यं ताम्बूलं च प्रदक्षिणा। पुष्पाञ्जलिरिति प्रोक्ता उपचारास्तु षोडश। फलेन सफलावाप्तिः साङ्गता दक्षि-

**पाद्योः पाद्यं सम० । हस्तयोरर्घं स० । अर्घाङ्गमाचमनीयं स० । स्नानीयं स० ।**

---

दारुमयं वाश्ममायतं कौशतैजसम् । षड्विधं चासनं प्रोक्तं देवताप्रीतिकारकमिति । द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभा इति च । उपचारेषु सर्वेषु यत्किञ्चिद्द्दुर्लभं भवेत् । तत्सर्वं मनसा ध्यात्वा पुष्पक्षेपेण कल्पयेत् ।

पाद्यमिति । पाद्यं श्यामाकदूर्वाब्जविष्णुक्रान्ताभिरुच्यते इति । अर्घमिति । अत्र यकाररहित एवार्घशब्दो वाजसनेयिभिः पठनीयः पारस्करसूत्रे तथैव प्रायशो दर्शनात् । आपः क्षीरं कुशाग्राणि दधि दूर्वाऽक्षतास्तथा । फलं सिद्धार्थकश्चैव अर्घोऽष्टाङ्गः प्रकीर्त्तित इति । अर्घश्च शिरसि देयः । अर्घो मूर्ध्नि प्रदातव्य इति वचनात् । अर्घाङ्गमिति । अर्घे स्नाने तथा वस्त्रे उपवीतोपहारयोः । ततो विराडित्यनया दद्यादाचमनीयकम् । आचमनीयमिति । कर्पूरमगुरुं पुष्पं दद्याज्जातीफलं मुने । लवङ्गमपि कङ्कोलं शस्तमाचमनीयके । मूलमन्त्रेण वदने दद्यादाचमनीयकम् । स्नानीयमिति । अन्यानिवेदितं तोयं प्रकृतिस्थं सुशीतलम् । हेमादिकुम्भपात्रस्थं स्नानीयं जलमुच्यते

---

णार्पणमिति । पुरश्चर्यार्णवे दश द्वादशाष्टादश षट्त्रिंशच्चतुःषष्ट्युपचारा उक्ताः षोडशोपचारा अप्यनेकविधा उक्तास्ते तत एवागन्तव्याः । वस्तुतस्तु आवाहनासनार्घं पाद्याचमनमधुपर्कस्नानापश्च । वासोयुगलगन्धसुमनोयुतधूपदीपभोज्यानि प्रादक्षिण्यं नतिरिति कथयन्त्युपचारषोडशकामिति हेमाद्युक्तमेव ग्राह्यं न तन्त्रोक्तम् । **अथ राजोपचाराः संस्कारभास्करे** । ततः पञ्चामृताभ्यङ्गमङ्गस्योद्वर्त्तन तथा । मधुपर्कं परिमलद्रव्याणि विविधानि च । पादुकादोलनादर्शं व्यजनं छत्रचामरे । वाद्यार्त्तिक्यं नृत्यगीतशय्या राजोपचारका इति । गन्धं पुष्पं तथा धूपो दीपो नैवेद्यमेव च । एते पञ्चोपचाराश्च कैवल्यफलदायिनः । अत्र न दक्षिणा । गन्धादिका नैवेद्यान्ता पूजा पञ्चोपचारिकेति वचनात् ।

पुनराचमनीयं स०। ॐ पञ्च नद्यः सरस्वतीमपि यन्ति सस्रोतसः। सरस्वती तु पञ्चधा सो देशेऽभवत्सरित्। पञ्चामृतं मयाऽऽनीतं पयो दधि घृतं मधु। शर्करा च समायुक्तं स्नानार्थं प्रतिगृह्यताम्। गणेशाम्बिका० पञ्चामृतस्नानं सम०। शुद्धोदकस्नानं स०। स्नानान्ते आचमनीयं सम०। ॐ युवा सुवासाः परिवीत आगात्स उ

इति। गन्धाद्भिः कारयेत्स्नानमिति च। अक्षता गन्धपुष्पाणि स्नानपात्रे तथा त्रयमिति च। अत्रावसरे घण्टानिनादः कार्यः। स्नाने धूपे तथा दीपे नैवेद्ये भूषणे तथा। घण्टानादं प्रकुर्वीत तथा नीराजनेऽपि च। पुस्तकपूजायां ब्राह्मणपूजायां च स्नानं नास्ति। नैवेद्यं घण्टावाद्यं च नास्तीति केचित्। पुनराचमनीयमिति। शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम्।

पञ्चामृतेति। गव्यमाज्यं दधि क्षीरं माक्षिकं शर्करान्वितम्। एकत्र मिलितं ज्ञेयं दिव्यं पञ्चामृतं परमिति वचनान्मिलितं पञ्चामृतं ग्राह्यम्। अथवा दुग्धं दधि क्षौद्रमाज्यं शर्करा च तथैव हि। तस्य तस्य च मन्त्रेण तत्तद्द्रव्यं समर्पयेत् इति वचनात् पृथक् पृथक् देयम्।

१ या दृषद्वत्याद्याः पञ्च नद्यः सरस्वतीमपि यन्ति गच्छन्ति। किंभूताः सस्रोतसः। समानं स्रोतः प्रवाहो यासां ताः। तुरवधारणे। उकारः पादपूरणः। सा सरस्वत्येव पञ्चधा देशे सरिन्नदी अभवत् पञ्चापि स्वनामानि त्यक्त्वा सरस्वत्य एवाभवन्।

२ यौति गुणानेकीकरोति युवा, सुवासाः शोभनवस्त्रः, परिवीतः पुष्पादिभिः समन्ताद्वेष्टितः सन् आगात्प्राप्तोऽस्माभिः। स जायमान उत्पद्यमानः सन् श्रेयान् श्रेष्ठ एव भवति। स्वाध्यः शोभनचित्तवृत्तयः मनसा देवयन्तो विचारयन्तो धीरासो धीरा विद्वांसः कवयस्तमुन्नयन्ति परिदधते।

श्रेयान्भवति जायमानः । तं धीरासः कवय उन्नयन्ति स्वाध्यो मनसा देवयन्तः । शीतवातोष्णसन्त्राणं लज्जाया रक्षणं परम् । देहालङ्करणं वस्त्रमतः शान्तिं प्रयच्छ मे । गणेशाम्बिका० वस्त्रं स० ।

यज्ञोपवीतं परमं पवित्रं प्रजापतेर्यत्सहजं पुरस्तात् । आयुष्यमग्र्यं प्रतिमुञ्च शुभ्रं यज्ञोपवीतं बलमस्तु तेजः । यज्ञोपवीतमसि यज्ञस्य त्वा यज्ञोपवीतेनोपनह्यामि । नवभिस्तन्तुभिर्युक्तं त्रिगुणं देवतामयम् । उपवीतं मया

अस्मिन्पक्षे पयः पृथिव्यां, दधिक्राव्णो, मधुव्वाता, घृतं मिमिक्षे, अपाॅं रसमिति पञ्चभिर्मन्त्रैः स्नानं बोध्यम् । तस्य तस्य मन्त्रेण पयः पृथिव्यामित्यादिनेत्यर्थः । अत्र पञ्चामृतस्नानानन्तरं पञ्चोपचारपूजां विधाय वस्त्रादि देयमिति तन्त्रविदः ।

नवभिरिति । यज्ञोपवीतं कुर्वीत सूत्राणि नव तन्तवः । एकेन ग्रन्थिना तन्तुर्द्विगुणस्त्रिगुणोऽथवा । शुचौ देशे शुचौ सूत्रं संहताङ्गुलिमूलके । आवेष्ट्य षण्णवत्या तत्त्रिगुणीकृत्य यत्नतः । अब्लिङ्गकैस्त्रिभिः सम्यक् प्रक्षाल्योर्ध्ववृतं त्रिवृत् । करेण दक्षिणेनोर्ध्वं गतेन त्रिगुणीकृतम् । वलितं मानवैः सूत्रं शास्त्रे ऊर्ध्ववृतं स्मृतम् ।

१ हे देव त्व यज्ञोपवीत प्रतिमुञ्च धारय । किं भूतं परमं पवित्रं, यत्पुरस्तात्पूर्वं प्रजापतेर्ब्रह्मणः सहजं सहजातं, आयुष्यमायुर्वृद्धिकरं, अग्र्य श्रेष्ठं, शुभ्रं निर्मलं, एतत्परिधानेन बलं तेजश्चास्तु । हे यज्ञोपवीत त्वं यज्ञोपवीतमसि हे देव यज्ञस्य विष्णोर्यज्ञोपवीतेन त्वा त्वामुपनह्यामि संयोजयामि । यद्यपि परमात्मना उप समीपे वीतं विविधमागतं जीवस्वरूप प्रतिमुञ्च मोचयेत्येवमर्थेन ब्रह्मोपनिषत्प्रकरणे पठितस्यास्य मन्त्रस्य ब्रह्मपरत्वं तथापि प्रसिद्धयज्ञोपवीतस्यापि संभवात्तत्र विनियोगः ।

दत्तं गृहाण परमेश्वर । गणेशाम्बिका० यज्ञोपवीतं स० । आचमनीयं स० । ॐ त्वां गन्धर्वाऽअखनंस्त्वामिन्द्रस्त्वां बृहस्पतिः । त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत । श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुरश्रेष्ठ चन्दनं प्रतिगृह्यताम् । गणेशाम्बिका० गन्धं स० । अक्षन्नमीमदन्त ह्यव प्रियाऽअधूषत । अस्तोषत स्व-

( ऊर्ध्वं गतेनोर्ध्वस्थितेन दक्षिणकरेण यद्वलितं तदूर्ध्ववृतम् ) अप्रदक्षिणमावृत्तं सावित्र्या त्रिगुणीकृतम् । अधः प्रदक्षिणावृत्तं समं स्यान्नवसूत्रकम् । त्रिरावेष्ट्य दृढं बध्वा हरिब्रह्मेश्वरान्नमेत् । यज्ञोपवीतं परमं पवित्रमिति धारयेत् । सावित्र्या दशकृत्वोऽद्भिर्मन्त्रिताभिस्तदुक्षयेत् । विच्छिन्नं वाऽप्यधोयातं भुक्त्वा निर्मितमुत्सृजेत् । छन्दोगपरिशिष्टे तु प्रकारान्तरमुक्तम् । पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् । तद्धार्यमुपवीतं स्यान्नातिलंबं न चोच्छ्रितम् । अस्मिन्पक्षे न षण्णवत्या आवेष्टनं किन्तु यावता उक्तमानमुपवीतं सम्पद्यते तावत्सूत्रमानं कल्पनीयम् । गन्धमिति । अनामिकया देवा-

१ हे ओषधे गन्ध गन्धर्वास्त्वामखनन् न्यवेदयन् । इन्द्रस्त्वां न्यवेदयत् बृहस्पतिश्च त्वां न्यवेदयत् सोमो राजा त्वां न्यवेदयत् । किं च यक्ष्माद्रोगादमुच्यत मुक्तोऽभूदिति गन्धप्रशंसा वाक्यार्थः ।

२ देवा अस्मद्दत्तानक्षतान्भक्षितवन्तोऽगृह्णन्निति यावत् गृहीत्वा चामीमदन्त हर्षं प्राप्ताः । हि यस्मात्प्रियाः प्रीतियुक्तास्ते अवाधूषत शिरः कम्पितवन्तः । किञ्च स्वभानवः स्वय दीप्तियुक्ता विप्रा ब्राह्मणा नविष्ठया नवतमया मती मत्या अस्तोषत स्तुतिं कृतवन्तः । हे इन्द्र त्वमपि ते तव हरी हरितवर्णावश्वौ योज आगमनाय रथे योजय तवाभीष्टाया देवतृप्तेः सम्पन्नत्वात्त्वयाऽप्यागन्तव्यमिति प्रार्थना वाक्यार्थः ।

भानवो विप्रा नविष्ठया मती योजा न्विन्द्र ते हरी । अक्षताश्च सुरश्रेष्ठाः कुङ्कुमाक्ताः सुशोभिताः । मया निवेदिता भक्त्या गृहाण परमेश्वर । अक्षतान् सम०

ॐ ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः । अश्वाइव सजित्वरीर्वीरुधः पारयिष्णवः ॥ माल्यादीनि सुगन्धीनि मालत्यादीनि वै प्रभो । मयाऽऽहृतानि पुष्पाणि पूजार्थं प्रति गृह्यताम् । गणेशाम्बिका० पुष्पमालां स० । ओं काण्डात्काण्डात्प्ररोहन्ती परुषः परुषस्परि । एवानो

---

नामृषीणां च तथैव । गन्धानुलेपनं कार्यं प्रयत्नेन विशेषतः । पितॄणामर्पयेद्गन्धं तर्जन्या च सदैव हि । तथैवाङ्गुष्ठमध्याभ्यां धार्यो गन्धः स्वयं बुधैः । अत्र मूलं मृग्यम् । अक्षतानिति । अक्षतास्तु यवाः प्रोक्ता अभावे व्रीहयः स्मृताः । तदभावे च गोधूमा न तु खण्डिततण्डुला इति परशुरामः ।

माल्यादीनीति । अत्र पुष्पाणीत्यन्तमेकं वाक्यम् । एतत् त्वया पूजार्थं प्रतिगृह्यतामित्यपरमिति वाक्यभेदेन योजना । पुष्पमाला-

---

१ हे ओषधीरोषधयो यूयं प्रतिमोदध्वं हृष्टा भवत । कीदृश्यो यूय पुष्पवतीः पुष्पैर्युक्ताः । प्रसूवरीः फलप्रसववत्य । अश्वा इव सजित्वरीः रोगजयशीलाः । विविधं रुन्धन्ति रोगं निवारयन्तीति वीरुधः । पारयन्ति कर्मेति पारयिष्णवः । पुष्पवत्त्वेनौषधिस्मरणात्पुष्पनिवेदनेऽस्य विनियोगः ।

२ मूलैर्भूसम्बद्धं पर्व काण्डं, भूम्यसंबद्धं पर्व परुः । हे दूर्वे काण्डात्काण्डात्प्रतिकाण्डं परुषः परुषः प्रतिपरुः भूमिसम्बद्धासम्बद्धेभ्यः सर्वपर्वभ्यः सकाशाद्यथा त्व परि समन्तात्प्ररोहन्ती अङ्कुरवती वर्त्तसे हे दूर्वे एव एव स्वाङ्कुरविस्तारवत्सहस्रेण शतेन च असङ्ख्यैः पुत्रपौत्रनप्त्रादिभिरस्मान्प्रतनु विस्तारय ।

दूर्वे प्रतनु सहस्रेण शतेन च ॥ दूर्वाङ्कुरान् सुहरितानमृतान्मङ्गलप्रदान् । आनीतांस्तव पूजार्थं गृहाण गणनायक । गणेशा० दूर्वाङ्कुरान् स० । ॐ अहिरिव[1] भोगैः

---

मिति । नाक्षतैरर्चयेद्विष्णुं न तुलस्या गणाधिपम् । न दूर्वया यजेद्देवीं बिल्वपत्रैर्न भास्करम् । उन्मत्तमर्कपुष्पं च विष्णोर्वर्ज्यं सदा बुधैरिति । पुष्पाभावे प्रवालैर्वा तदभावे च कोरकैः । तदभावे फलैः पत्रैस्तदभावे तृणाङ्कुरैः । स्कान्दे । पत्रं वा यदि वा पुष्पं फलं वाऽपि तथैव च । केशवार्थे शिवार्थे वा यथोत्पन्नं तथाऽर्पयेत् । अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधिं विना । सङ्ग्रहे । पत्रं वा यदि वा पुष्पं फलं नेष्टमधोमुखम् । यथोत्पन्नं तथा देयं बिल्वपत्रमधोमुखम् । पुष्पं चाधोमुखं नेष्टं तुलसीबिल्ववर्जितम् । तस्माच्चाधोमुखं देयं बिल्वपत्रं च शङ्करे । पुष्पमूर्ध्वमुखं योज्यं पत्रं योज्यं त्वधोमुखम् । फलं तु सम्मुखं योज्यं यथोत्पन्नं तथार्पयेदिति । मध्यमानामिकामध्ये पुष्पं सङ्गृह्य पूजयेत् । अङ्गुष्ठतर्जनीभ्यां च देवे पुष्पं निवेदयेत् । अङ्गुष्ठतर्जनीभ्यां च निर्माल्यमपनोदयेत् । शिवरहस्ये । वामपत्रे वसेद्ब्रह्मा पद्मनाभश्च दक्षिणे । मध्यपत्रे स्थितः साक्षात्साङ्गः सर्वार्थसाधकः । इन्द्रादयो लोकपाला वृन्ताग्रे परिकीर्त्तिताः । पृष्ठभागे स्थितो यक्ष अभक्तानां निषेधकः । पूर्वभागे स्थितः स्कन्दो देवैर्ब्रह्मादिभिः पुरा । तस्माद्वै पूर्वभागेन पूजयेद्गिरिजापतिम् । पञ्चवक्त्रं भवेद्बिल्वं पञ्चवक्त्रः स्वयं शिवः । पञ्चपत्रार्चितो देवो

---

१ हस्तं हन्ति व्याप्नोति स्पर्शमात्रेणेति हस्तघ्नः परिमलद्रव्यं पुमांसं विश्वतः परि पातु रक्षतु । किं भूतः विश्वा विश्वानि सर्वाणि वयुनानि कान्तीर्विद्वान् जानन् । तथा पुमान् पुरुष इव शूरो रञ्जकः । किं च यत्परिमलद्रव्यमहिः सर्प इव भोगैरुपभोगैर्बाहुं पर्येति व्याप्नोति । तथा ज्याया हेतिं बाणं शत्रुप्रेरितं परिबाधमानो निवर्त्तयन् ।

पर्य्येति बाहुं ज्याया हेतिं परिबाधमानः। हस्तघ्नो व्विश्वा व्वयुनानि व्विद्वान्पुमान्पुमाꣳसं परि पातु व्विश्वतः ॥ नानापरिमलैर्द्रव्यैर्निर्मितं चूर्णमुत्तमम्। अबीरनामकं चूर्णं गन्धं चारु प्रगृह्यताम्। गणेशाम्बि० नानापरिमलद्रव्याणि स०।

नैवेद्यं पुरतो निधाय। ॐ धूरसि धूर्व धूर्वन्तं धूर्वतं योऽस्मान्धूर्वति तं धूर्व यं व्वयं धूर्वामः। देवानामसि व्वह्नितमꣳ सस्नितमं पप्रितमं जुष्टतमं देवहूतमम्।

---

लत्पत्रार्चितो भवेत्। षट्पत्रेण तु बिल्वेन पूजितश्च स्वयं शिवः। ददाति शिवसायुज्यं सप्तपत्रार्चितस्तथा। षट्पत्रैः सप्तपत्रैश्च बिल्वपत्रैः शिवोऽर्चितः। एकेन लत्पत्राणां सौवर्णानां फलं लभेदिति। आवरणपूजा चेत्पुष्पदानानन्तरं कर्त्तव्या। कृत्वाऽऽवरणपूजां तु धूपदीपौ निवेदयेदिति पुरश्चर्यार्णवोक्तेः। परिमलेति। रजनी सहदेवी च शिरीषं लक्ष्मणाऽपि च। सहभद्रा कुशाग्राणि उद्वर्त्तनमिहोच्यते। हरिद्रा कुङ्कुमं चैव सिन्दूरादि समन्वितम्। कज्जलं कण्ठसूत्रादि सौभाग्यद्रव्यमुच्यते।

पुरतो निधायेति। नैवेद्यं पुरतः कृत्वा धूपदीपौ प्रदर्शयेदिति केचित्। अन्ये तु पुरतो नियमो नास्ति दीपनैवेद्ययोः क्वचिदिति

---

१ हे धूप त्वं धूर्हिंसकोऽस्यसुराणाम्। अतो धूर्वन्तं हिंसन्तं त्वं धूर्व विनाशय। यः शत्रुरस्मान्धूर्वति हिंसितुमुद्युक्तस्तं च धूर्व, य शत्रुं वय धूर्वामस्तमपि धूर्व। त्वं देवानां वह्निममतिशयेन वह्निरूपोऽसि। क्लीबत्वमार्षमेवमग्रेऽपि। सस्नितममतिशुद्धं, पप्रितमं यजमानानां फलदातार, जुष्टतमं देवानामतिप्रिय, देवहूतिमं देवानामाह्वाता एव धूप स्तुत्वाऽऽघ्रापयेत्। स्मार्त्तविनियोगबलादित्थं मन्त्रो व्याख्यात इति न भाष्यविरोध उद्भावनीयः।

वनस्पतिरसोद्भूतो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रति गृह्यताम्। गणेशाम्बि० धूपमाघ्रापयामि। ॐ अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा। अग्निर्व्वर्चो ज्योतिर्व्वर्चः स्वाहा सूर्यो व्वर्चो ज्योतिर्व्वर्चः स्वाहा। ज्योतिः सूर्यः सूर्यो ज्योतिः स्वाहा। साज्यं च वर्त्तिसंयुक्तं वह्निना योजितं मया। दीपं गृहाण देवेश त्रैलोक्यतिमिरापहम्। भक्त्या दीपं प्रयच्छामि देवाय परमात्मने। त्राहि मां निरयाद् घोराद्दीपज्योतिर्नमोऽस्तुते। गणेशा० दीपं दर्शयामि

पुरश्चर्यार्णवोक्तं वचनमाहुः। धूपमाघ्रापयामीति। तन्त्रसारे। मध्यमानामिकाङ्गुल्योर्मध्यपर्वणि दैशिकः। अङ्गुष्ठाग्रेण देवेशि धृत्वा धूप निवेदयेत्। ततः समर्पयेद्धूपं घण्टावाद्यजयस्वनैः। न धूप वितरेद्भूमौ नासने न घटे तथा। यथा तथाऽऽधारगत कृत्वा तं विनिवेदयेत्। वामतस्तु तथा धूपमग्रे वा न तु दक्षिणे। धूपदीपौ सुभोज्यं च देवताग्रे निवेदयेदिति। धूताशेषमहादोषपूतिगन्धप्रहारितः। परमामोदजननाद्धूप इत्यभिधीयते। दीपं दर्शयामीति। पुरश्चर्यार्णवे। दीर्घाज्ञानमहाध्वान्ताहङ्कारपरिवर्जनात्। परतत्वप्रकाशाच्च दीप इत्यभिधीयते। तैजसं राजतं लौहं मार्त्तिक्यं नारिकेलजम्। तृणराजोद्भवं वापि दीपपात्रं प्रशस्यते। वर्त्तिः श्वेताऽथवा रक्ता न पीता नाऽसि-

२ योऽयमग्निर्देवः स एव ज्योतिः, यच्चेदं ज्योतिस्तद्देवाग्निः। देवस्य ज्योतिषश्च कदाचिदप्यवियोगादेकत्वेन प्रतिपादनम्। स्वाहा ज्योतीरूपायाग्नये हविः प्रदत्तम्। एवमग्रेऽपि व्याख्येयम्। इत्थं दीपमेतादृशगुणविशिष्टाग्न्यादिरूपत्वेन भावयित्वा तेन देवं नीराजयेदिति संस्कारदीपके।

हस्तौ प्रक्षाल्य । ॐ अन्नपतेऽन्नस्य नो देह्यनमीवस्य शुष्मिणः । प्र प्र दातारं तारिषऽ ऊर्जं नो धेहि द्विपदे चतुष्पदे । नैवेद्यं गृह्यतां देव भक्तिं मे ह्यचलां कुरु । ईप्सितं मे वरं देहि परत्र च परां गतिम् । शर्कराखण्ड-खाद्यानि दधिक्षीरघृतानि च । आहारो भक्ष्यभोज्यं च नैवेद्यं प्रति गृह्यताम् । गणेशाम्बि० नैवेद्यं निवेदयामि ।

---

ताऽपि च । पटो वा नूतनः शुक्लो वर्त्तिकायां प्रशस्यते । वर्त्त्या कर्पूरगर्भिण्या सर्पिषा तिलजेन वा । आरोप्य दर्शयेद्दीपानुच्चैः सौरभ-शालिनः । दीपं दक्षिणतो दद्यात्पुरतो ना न वामतः । सर्वंसहा वसुमती सहते न द्वयं त्विदम् । अकार्यं पादघातं च दीपतापं तथैव च । कृत्वा तु पृथिवीतापं दीपमुत्सृजते नरः । स तापपापं नरकं प्राप्नोत्येव शतं समाः । लभ्यते यस्य तापस्तु दीपस्य चतुरङ्गुलात् । न स दीप इति ख्यातो ह्योघवह्निस्तु स स्मृतः । नैव निर्वापयेद्दीपं देवार्थमुपकल्पितम् । दीपहर्त्ता भवेदन्धः काणो निर्वापको भवेत् । दीपनिर्वापणात्पुंसः कूष्माण्डच्छेदनात् स्त्रियः । अचिरेणैव कालेन पिण्डनाशो भवेद् ध्रुवम् । नैव निर्वापयेद्दीपं लक्ष्मीनाशकरो यतः ।

नैवेद्यमिति । तैजसेषु च पात्रेषु सौवर्णे राजतेऽपि वा । ताम्रे वा प्रस्तरे वाऽपि पद्मपत्रेऽपि वा पुनः । यज्ञदारुमये वाऽपि नैवेद्यं कल्पयेद् बुधः । सर्वाभावे तु माहेयं स्वहस्तघटितं यदि । नैवेद्यं

---

३ हे अन्नस्य पते पालक अग्ने नोऽस्मभ्यमन्नस्यान्न देहि । कर्मणि षष्ठी । कीदृशस्य नास्ति अमीवाव्याधिर्येन तस्य, शुष्म बलं ( निघ० २. ९. ११ ) विद्यते यस्मात्तच्छुष्मि तस्य । किंच अन्नस्य दातारं प्रतारिषः प्रकर्षेण वर्धय पादपूर्त्त्यै प्रोपसर्गस्य द्वित्वम् । किंच नोऽस्माकं द्विपदे मनुष्ये पुत्रादौ चतुष्पदे गवादौ च

तुलसीं प्रक्षिप्य प्राणाय[1] स्वाहा। अपानाय स्वाहा। व्यानाय स्वाहा। समानाय स्वाहा। उदानाय स्वाहा। नैवेद्यान्ते आचमनीयं स०। मध्ये पानीयं स०। उत्तरापोशनं स०। त्वां गन्धर्वा० चन्दनं मलयोद्भूतं कस्तूर्यादिसमन्वितम्। करोद्वर्त्तनकं देव गृहाण परमेश्वर। करोद्वर्त्तनार्थे चन्दनानुलेपनं स०। याः फलिनीर्या[2]ऽ

---

दक्षिणे भागे पुरतो वा न पृष्ठतः। भक्ष्यं भोज्यं च लेह्यं च पेयं चोष्यं च पञ्चमम्। सर्वत्र चैव नैवेद्यमाराध्यास्मै निवेदयेत्। निवेदयामीति। ततो निवेदयामीति सर्वं दद्यान्महेश्वरीति पुरश्चर्यार्णवे।

प्राणायेति। रामार्चनचन्द्रिकायाम्। प्रक्षिप्य तुलसीं प्रोक्ष्य वामाङ्गुष्ठेन संस्पृशेत्। ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम्। प्रदर्शयन् दक्षिणेन प्राणादीनां च दर्शयेत्। स्पृशेत्कनिष्ठोपकनिष्ठिके द्वे स्वाङ्गुष्ठमूर्ध्ना प्रथमेह मुद्रा। तथाऽपरा तर्जनिमध्यमे स्यादनामिकामध्यमिके च मध्या। अनामिकातर्जनिमध्यमाश्च तद्वच्चतुर्थी, सकनिष्ठिकास्ताः। स्यात्पञ्चमी मध्यमतः प्रदिष्टा प्राणादिमुद्रा निजमन्त्रयुक्ताः। नैवेद्यान्त इत्यादि। भोजनानन्तरं देयमद्भिः कर्पूरवासितैः। मद्यमाचमनं, मध्ये पानीयं, करमार्जनम्। गाण्डूषिक जलं दत्त्वा दद्यादाचमनं ततः। हस्तवासं सकर्पूरं मुकुटं भूषणानि च। करोद्वर्त्तनेति। पुनराचमनं दद्यात्करोद्वर्त्तनमेव चेति नारदीये।

---

१ प्राणाय स्वाहा ऽपानाय स्वा० व्यानाय स्वा० समानाय स्वा० उदानाय स्वाहेति क्रमं याज्ञवल्क्योऽमन्यताय क्रमो वाजसनेयिनामिति भोजनसूत्रे।

२ या ओषधीरोषधयः फलिनीः फलिन्यः। याश्चाफलाः याश्चापुष्पा याश्च पुष्पिणीः पुष्पिण्यः ताः सर्वा बृहस्पतिना प्रसूताः प्रेरिताः सत्यो नोऽस्मानंहसः पापाद्रोगरूपान्मुञ्चन्तु पृथक्कुर्वन्तु। फलवत्त्वेनौषधिस्मरणात्फलेऽस्य विनियोगः।

अफलाऽ अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वᳪ० हसः । पूगीफलं महद्दिव्यं नागवल्लीदलैर्युतम् । एलादिचूर्णसंयुक्तं तांबूलं प्रति गृह्यताम् । गणेशाम्बि० मुखशुद्ध्यर्थे ताम्बूलपत्रं पूगीफलं च स० । याः फलिनीर्या० । इदं फलं मया देव स्थापितं पुरतस्तव । तेन मे सफलावाप्तिर्भवेज्जन्मनि जन्मनि । गणेशाम्बि० ऋतुफलानि स० । हिरण्यगर्भः[3] समवर्त्तताग्रे भूतस्य जातः पतिरेकऽ आसीत् । स दाधार पृथिवीं द्यामुतेमां कस्मै

ताम्बूलमिति । संग्रहे । लवङ्गजातिकङ्कोलचूर्णं क्रमुकखादिरम् । कर्पूरसहितं पत्रं ताम्बूलं च समर्पयेत् । ऋतुफलानीति । फलं ताम्बूलसहितं दक्षिणां कनकान्विताम् । पुष्पाञ्जलिं ततः कुर्याद्भक्त्याऽऽदर्शं प्रकल्पयेत् । नीराजनं ततः कुर्यात्कार्पूरं विभवे सति । समर्प्य मुकुटादीनि भूषणं छत्रचामरे । प्रसादसुमुखं ध्यात्वा कुर्याच्चैव प्रदक्षिणाम् । नमस्कारं ततः कुर्यात्साष्टाङ्गं भक्तिपूर्वकम् । हरिभक्तिविलासे । पञ्च नीराजनान्कुर्यात्प्रथमं दीपमालया । द्वितीयं सोदकाब्जेन तृतीयं धौतवाससा । चूताश्वत्थादिपत्रैश्च चतुर्थं परिकीर्त्तितम् । पञ्चमं प्रणिपातेन साष्टाङ्गेन यथावि-

३ हिरण्ये हिरण्यपुरुषरूपे ब्रह्माण्डे गर्भरूपेणावस्थितः प्रजापतिर्भूतस्य प्राणिजातस्याग्रे समवर्त्तत प्राणिजातोत्पत्तेः पुरा स्वयं शरीरधारी बभूव । स च जात उत्पन्नमात्र एक एव ( उत्पत्स्यमानस्य जगतः ) पतिरीश्वर आसीत् स एक एव पृथिवीमन्तरिक्षं द्यां उतापि च इमां भूमिं दाधार धारयति स्म कस्मै काय प्रजापतये देवाय वयं हविषा विधेम हविर्दद्मः सूत्रात्मनो ब्रह्माण्डस्य तेजोवित्त्वसाम्येन हिरण्यशब्देनाभिहितत्वात्तत्रोपमानत्वप्रतीतेः स्तुतिरिति संस्कारदीपके । एवं हिरण्यं स्तुत्वा दक्षिणां दद्यात् ।

देवाय हविषा विधेम। हिरण्यगर्भगर्भस्थं हेम बीजं विभावसोः। अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे। गणेशाम्बिका० कृतायाः पूजायाः साद्‌गुण्यार्थे दक्षिणां स०। कर्पूरनीराजनं स०। गणेशाम्बिकाभ्यां० मन्त्र-पुष्पाञ्जलिं स०। नमस्करोमि।

ताम्ररजतादिपात्रे जलगन्धाक्षतफलपुष्पकुशाग्रदधि-दुग्धसर्षपान् (द्रव्यं च) प्रक्षिप्य हस्तयोर्गृहीत्वा "रक्ष रक्ष गणाध्यक्ष रक्ष त्रैलोक्यरक्षक। भक्तानामभयं कर्त्ता त्राता भव भवार्णवात्। द्वैमातुर कृपासिन्धो षाण्मातुराग्रज प्रभो। वरद त्वं वरं देहि वाञ्छितं वाञ्छितार्थद। अनेन सफलार्घेण फलदोऽस्तु सदा मम। गणेशाम्बि० विशेषार्घं स०। प्रार्थना। विघ्नेश्वराय वरदाय सुरप्रियाय लम्बोदराय सकलाय जगद्धिताय। नानाननाय श्रुतियज्ञ-विभूषिताय गौरीसुताय गणनाथ नमो नमस्ते। भक्तार्त्तिना-शनपराय गणेश्वराय सर्वेश्वराय शुभदाय सुरेश्वराय।

---

धि। आदौ चतुष्पादतले च विष्णोर्द्वौ नाभिदेशे च मुखे तथैकम्। सर्वेषु चाङ्गेष्वपि सप्त वारानारार्त्तिकं भक्तजनस्तु कुर्यात्। पुष्पाञ्ज-लिमिति। रामार्चनचन्द्रिकायाम्। वैदिकं मन्त्रमुच्चार्य दद्यात्पु-ष्पाञ्जलिं ततः। नमस्करोमीति। पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा सह। वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरितः। बाहुभ्यां चैव जानुभ्यां वचसा शिरसा दृशा। पञ्चाङ्गोऽयं प्रणामः स्यात्पू-जासु प्रवराविमौ।

विशेषार्घमिति। प्रारब्धकर्मसिद्ध्यर्थं देवाय कल्पयामि तत्।

विद्याधराय विकटाय च वामनाय भक्तप्रसन्नवरदाय नमो नमस्ते २ नमस्ते ब्रह्मरूपाय विष्णुरूपाय ते नमः । नमस्ते रुद्ररूपाय करिरूपायते नमः ३ विश्वरूपस्वरूपाय नमस्ते ब्रह्मचारिणे । भक्तप्रियाय देवाय नमस्तुभ्यं विनायक ४ लम्बोदर नमस्तुभ्यं सततं मोदकप्रिय । निर्विघ्नं कुरु मे देव सर्वकार्येषु सर्वदा ५ त्वां विघ्नशत्रुदलनेति च सुन्दरेति भक्तप्रियेति सुखदेति फलप्रदेति । विद्याप्रदेत्यघहरेति च ये स्तुवन्ति तेभ्यो गणेश वरदो भव नित्यमेव ६ अनया पूजया गणेशाम्बिके प्रीयेताम् इति जलंक्षिपेदिति संप्रदायः । आचरितगणेशाम्बिकापूजनविधौ यन्न्यूनातिरिक्तं तत्परिपूर्णमस्तु । ( विसर्जनं तु कर्मसमाप्त्यन्ते इति शिष्टाः ) इति गणपतिपूजनम् ।

अथ सकलशिष्टपरिगृहीतो दानखण्डे आश्वलायनगृह्यपरिशिष्टोक्तः स्वस्तिपुण्याहवाचनप्रयोगः ।

---

नारिकेलेन देयोऽर्घः फलेन फलकाङ्क्षिभिरिति परशुरामः । विसर्जनं त्विति । अनेकदिनसाध्ये कर्मणि विसर्जनमुत्कृष्यते आग्निमारुतादूर्ध्वमनुयाजैश्चरन्तीति वत् । एवं समग्रं निष्पाद्य सर्वदेवान्विसर्जयेदिति मात्स्ये विधानाच्च । तस्मात्कर्मणि समाप्ते अन्ते एव विसर्जनम् । इति गणपती ति । गणपतिपूजनं समाप्य गौरीपूजनपक्षे एकवचनान्तेन प्रयोग इत्युक्तं प्राक् ॥ इति गणपतिपूजनम् ॥

आश्वलायनेति । स्वशाखायामनुक्तत्वात्परशाखीयं पुण्याहवानं गृह्यते । यन्नाम्नातमिति वचनात् । अन्यशाखं परिशिष्टमन्यशाखिनां न भवतीति तु निर्मूलमेव । प्रयोगदीपे । स्वस्तिवाचनमत्रेष्टं गृह्यकर्मसु केषु चित् । अदृष्टमपि शास्त्रेऽस्मिन्मङ्गलार्थमुदीरितम् । पुण्याहवाचनेति । अत्र निमित्तानि विधानरत्नमालायाम् । पुण्येऽ-

हनि तु सम्प्राप्ते विवाहे चौलके तथा। व्रतबन्धे च यज्ञादौ तथा यजनकर्मणि। गृहारम्भे धनप्राप्तौ तीर्थाभिगमने तथा। गृहप्रवेशने चैव ग्रामस्याभिनिवेशने। नवग्रहमखे शान्तावद्भुतेषु तथैव च। गजबन्धे तुरङ्गाणां दासादीनां च सङ्ग्रहे। धर्मकर्मसु सर्वेषु प्रारम्भे स्वस्तिवाचनम्। बौधायनसूत्रेऽपि। अथ स्वस्तिवाचनं सेतुबन्धनदीखाततडागपुष्करणीवापीकूपदेवगृहप्रासादवसतीनामोषधिवनस्पतीनां चेत्यादीति। स्मृत्यन्तरे। पत्नीपुत्रैः समायुक्तः शुभार्थी ब्राह्मणैः सह। पुण्याहवाचनं कुर्यात्सर्वेषु वृद्धिकर्मसु। शौनकोऽपि। अन्यस्मिन्नपि सर्वस्मिन् शुभे कर्मणि चोदिते। वाचनीया द्विजाः सर्वे वेदशास्त्रपरायणा इति। व्यासः। सम्पूज्य *गन्धमाल्याद्यैर्ब्राह्मणान् स्वस्ति वाचयेत्। धर्मकर्मणि माङ्गल्ये सङ्ग्रामेऽद्भुतदर्शने इति। श्रौतेषु कर्मसु स्मार्त्तेषु पाकयज्ञेषु च प्रथमानुष्ठाने एवैतद्भवति न द्वितीयादिप्रयोगे। विश्वकर्माप्रकाशे। उपाकर्मोत्सर्जनयोः †श्रौतानां कर्मणां तथा। प्रथमानुष्ठितावेव स्वस्तिवाचनमिष्यते। एतच्च सर्वकर्मसु आदौ कार्यं "पुण्याहवाचनं शस्तमादौ स्यात्सर्वकर्मसु। नाकृत्वैतद् बुधः कुर्यात्सर्वकर्माणि मानव इति वचनात्। केचित्तु गर्भाधानादिसंस्कारेष्विष्टापूर्त्ते क्रतुष्वपि। वृद्धिश्राद्धं पुरा कार्यं कर्मादौ स्वस्तिवाचनमित्येतस्य वचनस्य यथाश्रुतमर्थमनुसरन्तः पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतादृशक्रमेणानुष्ठानमाचरन्ति तन्न। गर्भाधानादीत्यस्मिन्वाक्ये पूर्वं वृद्धिश्राद्धं ततः स्वस्तिवाचनमित्येतावतैव सिद्धे पुनः कर्मादावित्युक्तिर्वृद्धिश्राद्धसहितकर्मण आदौ स्वस्तिवाचनप्राप्त्यर्था। तेन पूर्वं स्वस्तिवाचनं ततो वृद्धिश्राद्धमि-

---

* गन्धमाल्याद्यैरिति वचनं गन्धपूर्वभाविनां पादप्रक्षालनादीनामुपचाराणामनावश्यकत्वबोधनार्थं, माद्यशब्देन ताम्बूलादिग्रहणम्।

† अत्रोपाकर्मोत्सर्जनग्रहणं नित्यानां श्रवणाकर्माग्रहायणीकर्मैन्द्रयज्ञादीनामुपलक्षणम्।

तत्रादौ कलशस्थापनम् । तत्प्रकारः । "ॐ मही द्यौः पृथिवी च नऽ इमं यज्ञं मिमिक्षताम् । पिपृतां नो भरीमभिः । इति कलशाधारभूमिं स्पृष्ट्वा " ॐ ओषधयः समवदन्त सोमेन सह राज्ञा । यस्मै कृणोति

त्येवानुष्ठानक्रमः । पितृभक्तितरङ्गिण्यां वाचस्पतिमिश्रा अपि । आदौ प्रधानसङ्कल्पस्ततः पुण्याहवाचनम् । मातृपूजा ततः कार्या वृद्धिश्राद्धं ततः परमिति संस्कारचिन्तामणौ । शौनकेन तु कर्मसमाप्तावप्येतदुक्तम् । स्वस्तिवाचनमेवं तु सर्वेषामृद्धिकर्मणाम् । आदावन्ते च कर्त्तव्यमिति वेदविदां मतमिति । अत्र देशाचारतो व्यवस्था । देवभद्रेण प्रयोगसारे ज्योतिष्टोमस्यान्तेऽपि पुण्याहवाचनमुक्तम् ।

कलशस्थापनमिति । गोमयेनोपलिप्योर्वीं रङ्गवल्लिकयाऽर्चयेत् । प्रस्थधान्ये परिष्ठाप्यं पूर्णं हि कलशद्वयमिति हारीतवचनं यद्यप्यस्ति तथापि बिभ्रत्कुम्भमपां पूर्णं पिहिताननमर्चितमिति शौनकीयात्, आचार्य उदकुम्भं तं धारयेत्तदनन्तरमिति परशुरामोक्तेः, हस्ते कलशमुद्धृत्य नमेत् त्रीणि पदानि चेति परिशिष्टोक्तेः, समाराध्यैक एव कुम्भः स्थाप्यः । तत्प्रकार इति । परशुरामः । कलशस्थापनं कार्यं कमलेऽष्टदलेऽमले । उदकुम्भं समानीय रुद्रकुम्भवदर्चयेत् ।

१ मही महती द्यौः पृथिवी च नोऽस्माकमिमं यज्ञं मिमिक्षतां स्वैः स्वैः भागैः पूरयताम् । किञ्च भरीमभिर्भरणैर्हिरण्यपशुधान्यादिभिर्नो गृहं पिपृतां पूरयताम् । श्लो० पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । कलशाधारभूतं हि पवित्रं कुरु चासनम् ।

२ राज्ञा सोमेन सह ओषधयः समवदन्त सवाद कृतवत्यः । संवादमाह ब्राह्मणो यस्मै रुग्णाय कृणोति अस्मन्मूलादिना चिकित्सां करोति हे राजन् तं रुग्णं नरं वयं पारयामसि पारयामः । श्लो० यवोऽसि धान्यराजस्त्वं सर्वोत्पत्तिकरः शुभः । प्राणिनां जीवनोपायः कलशाधः क्षिपाम्यहम् ।

३ अत्रोपसर्गात्सुनोतीति षत्वम् ।

ब्राह्मणस्तं० राजन्पारयामसि" इति स्पृष्टप्रदेशे उपकल्पितप्रस्थधान्यस्य पुञ्जं कृत्वा ऽष्टदलं विलिख्य "ॐ आ जिघ्र कलशं मह्या त्वा विशन्त्विन्दवः । पुनरूर्जा नि वर्त्तस्व सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती पुनर्माऽऽविशताद्रयिः ।"

इति धान्यपुञ्जस्योपरि अच्छिद्रं नूतनं हैमं राजतं ताम्रमभावे मृण्मयं वा सूत्रवेष्टितकण्ठं कृतस्वस्तिकं

---

भूमिं भूरसि सम्प्रार्थ्य आजिघ्रेत्यंबुजे न्यसेत्। मही द्यौर्वारिणाऽऽपूर्य या ओषधीरौषधीः क्षिपेत्। हिरण्यगर्भ इति द्रव्यमश्वथे वस्तु पल्लवान्। पूर्णादर्वि पूर्णपात्रं धान्यं धान्यमसीति च। याः फलिनीः फलं तस्मिन्नुपरिष्टान्निधापयेत्। सुजातो ज्योतिषा वासोयुग्मेन परि वेष्टयेत्। पञ्च रत्नानि मध्येऽस्य परिवाजपतिस्तथेति। प्रस्थधान्यस्येति। अत्र धान्यशब्देन सतुषं द्रव्यमभिधीयते तेन तस्यैव निधानम्। कश्चित्त धान्यमसि धिनुहि देवानिति तण्डुलेष्वपि धान्यशब्द प्रयोगात्तस्यैव निधानमित्याह। सप्त धान्यानि निधेयानीत्याधुनिकाः। तानि च यवगोधूमधान्यानि तिलाः कङ्गुस्तथैव च। श्यामाकाश्चणकाश्चैव सप्त धान्यानि सं विदुरिति।

हैममिति। हेमाद्रौ। हैमराजतताम्रा वा मृण्मया लक्षण-

---

१ हे महि पृथिवि त्व कलशमाजिघ्र धारय इन्दवः सोमाः तत्तुल्याः कलशरसास्त्वा त्वामाविशन्तु ऊर्जा जलभूतेन रसेन सह पुनरस्मान्प्रति निवर्त्तस्व। सा त्वं नो ऽस्माकं सहस्र धुक्ष्व सहस्रसङ्ख्यं धनं देहि हे पृथिवि त्वत्प्रसादादुरुधारा बहुपयोयुक्ता पयस्विनी गौः, रयिर्धनमपि मा मां पुनराविशतादागच्छतु इत्थं पृथिवीं प्रार्थ्य कलशं तत्र स्थापयेत्। श्लो० कलाः कला हि देवानां दानवानां कलाः कलाः। आदाय निर्मितो यस्मात्कलशस्तेन कथ्यते।

कलशं संस्थाप्य "ॐ व्वरुणस्योत्तम्भनमसि व्वरुणस्य स्कम्भसर्जनी स्थो व्वरुणस्य ऽऋतसदन्यासि व्वरुणस्यऽ ऋतसदनमसि व्वरुणस्य ऽऋतसदनमासीद" इत्युपकल्पितकलशोदकेन तं पूरयित्वा त्वाङ्गन्धर्वा (पृ० ३१ पं० २) इति गन्धं प्रक्षिप्य, "ॐ या ओषधीः पूर्व्वा जाता देवेभ्यस्त्रियुगं पुरा । मनै नु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ इति सर्वौषधीः प्रक्षिप्य, काण्डात्काण्डादिति

---

न्विताः । पञ्चाशाङ्गुलवैपुल्या उत्सेधे षोडशाङ्गुलाः । द्वादशाङ्गुलमूलास्ते अष्टाङ्गुलमुखास्तथा । उपकल्पितकलशोदकेनेति । तीर्थोदकेन चापूर्य कलशं तु विचक्षण इति ।

सर्वौषधीरिति । हेमाद्रौ । कुष्ठं मांसी दरिद्रे द्वे मुरा शैलय-

---

1 हे जलधारे त्व वरुणस्योत्तम्भनमवलम्बनमसि । वरुणस्य स्कम्भस्यावरोधस्य सर्जनी साधनभूता स्थः असि व्यत्ययेन द्विवचनम् । वरुणस्य ऋताय यज्ञाय सदनी उपवेशनी असि वरुणस्य ऋतसदनमुत्तरासनं त्वमेवासि । वरुणस्य ऋतसदनं यज्ञार्थमासनभूत कुम्भ व्याप्यासीद तिष्ठ । ४।२६ श्लो० आपः स्थं यूयं देवेशा ज्योतिषां पतयस्तथा । भूतानां जीवनोपाया अतः कुम्भे क्षिपाम्यहम् ।

2 श्लो० श्रीखण्डं चन्दनं दिव्यं गन्धाढ्यं सुमनोहरम् । विलेपनं सुगन्धाय कलशे सङ्क्षिपाम्यहम् ।

3 या ओषधीरोषधयो देवेभ्यो ऽर्थं युगत्रये पुरा जाता उत्पन्नाः । बभ्रूणां पिङ्गलवर्णानां तासामोषधीनां शतं सप्त च धामानि अह मनै नु मन्ये एव । इत्थमोषधिरूपं ध्यात्वा सर्वौषधीः प्रक्षिपेत् । १२।७५ श्लो० सर्वौषध्यः सुगन्धाढ्या दिव्यवृष्टिसमुद्भवाः । कलशाप्यायनकरा मङ्गलाय क्षिपाम्यहम् ।

4 श्लो० दूर्वे ह्यमृतसम्पन्ने शतमूले शताङ्कुरे । शत मे हर पापानि शतमायुर्विवर्द्धिनी ।

(पृ० ३२ पं० ८) दूर्वाः प्रक्षिप्य, "ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता। गोभाज ऽइत्किलासथ यत्सनवथ पूरुषम्" इति पञ्च पल्लवान्प्रक्षिप्य "ॐ स्योना पृथिवि नो भवानृक्षरा निवेशनी । यच्छा नः शर्म सप्रथाः"

---

चन्दने। सटीचम्पकमुस्ताश्च सर्वौषधिगणः स्मृतः। सटी कचोरः। चम्पकः प्रसिद्धस्तस्य त्वक्। वचाचम्पकमुस्ताश्चेत्यपि पाठः।

पञ्च पल्लवानिति। हेमाद्रौ। पञ्चभङ्गसमायुक्तं फलवस्त्रयुगान्वितम्। पञ्चरत्नसमायुक्तं पूर्णपात्रयुतं तथा। अश्वत्थोदुंबरौ जम्बूचूतन्यग्रोधपल्लवाः। पञ्चभङ्गा इति प्रोक्ताः सर्वकर्मसु शोभना इति। पञ्चभङ्गाः पञ्चपल्लवाः। भविष्यपुराणे तु जम्बूस्थाने प्लक्ष उक्तः। केचित्तु न्यग्रोधपिप्पलप्लक्षजम्बूचूततरूद्भवाः। पल्लवाः पञ्च विज्ञे-

---

१ हे ओषधयः वो युष्माकमश्वत्थे आश्वत्थ्यां स्रुचि निषदनं स्थानं भवति हविषां तत्र स्थापनात्। किञ्च वो युष्माकं पर्णे पलाशमय्यां जुह्वां वसतिः स्थितिः कृता। किलेति प्रकर्षे इदेवार्थे। हे हविर्भूता ओषधयः अग्नौ हुताः सत्यो गोभाजो ऽसथ भवथ। गामादित्यं भजन्तीति गोभाजः। अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते। आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः। यद्यस्मात्कारणात्पुरुषं यजमानं सनवथ सेवध्वे अन्नदानेन पोषयथ तस्मादश्वत्थादिस्थानमिति संस्कारदीपके। १२।७९ श्लो० यज्ञवृक्षसमुद्भूतान्पल्लवान्सरसान् शुभान्। अलङ्काराय पञ्चैतान् कलशे सङ्क्षिपाम्यहम्।

२ हे पृथिवि त्व नोऽस्माकं स्योना सुखरूपा भव। किम्भूता अनृक्षरा ऋक्षकः कण्टकस्तद्रहिता। तथा निवेशनी निविशन्ति जना यस्यां सा, तथा सप्रथाः प्रथनं प्रथो विस्तारः। प्रथसा सह वर्तमाना सर्वतः पृथुः। किञ्च नोऽस्माकं शर्म शरणं यच्छ देहि ॥ ३५।२१ ॥ श्लो० उद्धृता ऽसि वराहेण कृष्णेन शतबाहुना। दंष्ट्राग्रैर्लीलया देवि यज्ञार्थं प्रणमाम्यहम्।

इति सप्तमृदः प्रक्षिप्य ॐ याः फलिनीर्या[1]० इति पूगीफलं प्रक्षिप्य "ॐ परि[2] वाजपतिः कविरग्निर्हव्यान्यक्रमीत् । दधद्रत्नानि दाशुषे" इति पञ्च रत्नानि प्रक्षिप्य (अभावे हेम वा । हेमादिप्रक्षेपे ऽप्ययमेव मन्त्रः ) * हिरण्यगर्भ[3] इति हिरण्यं प्रक्षिप्य ॐ सुजातो[4]

यास्त्वक् चैतेषामपीष्यते इति ब्रह्माण्डपुराणात्पल्लवप्रक्षेपानन्तरमश्वत्थे व इति मन्त्रेणैव पञ्चत्वक्प्रक्षेपणमप्याहुः ।

सप्तमृद इति । अश्वस्थानाद्गजस्थानाद्वल्मीकात्सङ्गमाद्ध्रदात् । राजद्वाराच्च गोष्ठाच्च मृद आनीय निक्षिपेदिति । अत्र पञ्चमृत्प्रक्षेपणं केचिदाहुस्तन्मते ह्रदान्तमृत्प्रक्षेपण कार्यमिति । पञ्चरत्नानीति । कालिकापुराणे । कनकं कुलिशं नीलं पद्मरागं च मौक्तिकम् । एतानि पञ्च रत्नानि रत्नशास्त्रविदो विदुः । मदनरत्ने तु सुवर्णं रजतं मुक्ता राजावर्त्तं प्रवालकम् । रत्नपञ्चकमाख्यातं समस्तसुरवल्लभमित्युक्तम् । अभावे इति । अभावे सर्वरत्नानां हेम सर्वत्र योजयेदिति तत्रैवोक्तेः । अयमेव मन्त्र इति । नहि द्रव्यान्तरबुद्ध्या तदुपादीयते । द्रव्यान्तरबुद्ध्या तदुपादाने कर्मान्तरता बुद्धिः स्यात् । सा च नेष्यते । हिरण्यमिति । द्रव्यान्तरप्रक्षेपेऽप्ययमेव मन्त्रः ।

१ श्लो० इदं फलं मया सम्यक् प्रक्षिप्तं कलशे यतः । तेनाय कलशः सम्यक् फलवानस्तु सर्वदा ।

२ अयमग्निर्हव्यानि हवींषि पर्यक्रमीत् परिक्रान्तवान् कीदृशोऽग्निर्वाजपतिर्वाजस्यान्नस्य पतिः पालकः कविः क्रान्तदर्शनः किं कुर्वन् हवींषि दत्तवते यजमानाय रत्नानि रमणीयानि धनानि दधत् प्रयच्छन् । श्लो० रत्नगर्भा ऽभवद्भूमी रत्नगर्भाश्च भूधराः । कलशो रत्नगर्भः स्यात्तस्माद्रत्नान्यहं क्षिपे ।

३ श्लो० हिरण्यगर्भगर्भस्थं हेम बी० ।

४ सुजातो ऽयं देवो ज्योतिषा सह शर्म सुखं यथा तथा वरूथ वरणीयं स्वः

ज्योतिषा सह शर्म वरूथमा ऽसदत्स्वः । वासो ऽअग्ने विश्वरूपᳯं सं व्ययस्व विभावसो" इति वस्त्रयुग्मेन (रक्तसूत्रेण च तं) वेष्टयित्वा "ॐ पूर्णा दर्वि परा पत सुपूर्णा पुनरापत । वस्नेव वि क्रीणावहाऽ इषमूर्ज्जᳯं शतक्रतो" इति सतण्डुलपात्रेण कलशाननमपिदध्यात् ।

(तत्र याः)फलिनीरिति नारिकेलं(पूगीफलं वा)स्वामि-

---

अस्मिन्कलशे हिरण्यं प्रक्षेप्तव्यमेव । अग्रे सुवर्णपूर्णकलशं धारयित्वेति दर्शनात् ।

सतण्डुलपात्रेणेति । सिततण्डुलपूर्णेन पात्रेण पिहिताननमर्चितमिति परशुरामवाक्ये सिततण्डुलग्रहणात्तैरेव पात्रपूरणं, अन्यत्र शान्त्यादौ तु "सौवर्णं राजतं वा ऽपि ताम्रं मृण्मयमेव वा । व्रीह्यादिपूर्णं त्वादध्यात्कुम्भोपरि पिधानकमिति सङ्ग्रहवचनाद् व्रीह्यादिभिर्वा पूरणम् ।

नारिकेलफलमिति । पात्रमक्षतपूर्णं तु फलपुष्पसमन्वितमिति

---

स्वर्गमासदत् अप्राप्नुवत् हे विभावसो देव विश्वरूप विचित्रं वासः सं व्ययस्व परिधत्स्व ११।४० ॥ श्लो० शरण्य सर्वलोकानां लज्जाया रक्षणं परम् । सुवेशकारक वस्त्रं कलशे वेष्टयाम्यहम् ।

१ हे देवि अन्नप्रदानसाधनभूते त्वं पूर्णा स्थास्थाः सकाशादन्नं गृहीत्वा पूर्णा भूत्वा परा पूर्णत्वादेव उत्कृष्टा सती पत इन्द्रं प्रति गच्छ । सुपूर्णा सुष्ठु पूर्णा सती पुनरापत भूयोऽस्मान्प्रत्यागच्छ । इन्द्रमाह हे शतक्रतो त्वं चाहं चो भौ वस्नेव वस्नेन मूल्येनेव इषमभीष्टमूर्जं रसविशेष विक्रीणावहै विक्रयं करवावहै अह तुभ्यं हविर्ददामि त्व मह्य फलं देहि । पात्रमपि तण्डुलैः पूर्णं दर्वीरूपेण भावयित्वा स्तूयते । श्लो० धान्यपूर्णमिदं पात्र स्थापितं कलशे यतः । तेनाय कलशः पूर्णः पूर्णाः सन्तु मनोरथाः ।

मुखं सं स्थापयेदिति सम्प्रदायः)अत्र वरुणावाहनपूजने अपि केचिदाहुः। "ॐ तत्त्वा यामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः। अहेडमानो वरुणेह बोध्युरुशꣳस मा नऽआयुः प्र मोषीः" अस्मिन्कलशे वरुणं साङ्गं सपरिवारं सायुधं सशक्तिकमावाहयामि स्थापयामि ॐ अपां पतये वरुणाय नमः इति वरुणं सम्पूज्य कलशे देवता आवाहयेत्। सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः। इति कलशे देवता आवाह्य कलशमभिमन्त्रयेद्देवता आवाहयेच्च।

---

शौनकोक्तेः। वरुणावाहनेति। इदं वरुणपूजनमाश्वलायनपरिशिष्टे बौधायनसूत्रे परशुरामकारिकादावनुक्तमपि शिष्टाचरणाद्रुद्रकल्पद्रुमादावुक्तमिति बोध्यम्। वरुणं सम्पूज्येति। तच्च षोडशोपचारैः कार्यम्। पञ्चोपचारैरिति बहवः। तेन वरुणपूजा गन्धादिनैव न तु पाद्यादिना। तन्मते पञ्चामृतस्नानमपि नास्ति। देवता आवाहयेदिति। प्रयोगपारिजाते कलशस्येत्यादिश्लोकानुक्त्वा "एवमेताः समावाह्य कलशे देवतास्ततः। एतन्मन्त्रस्थितान्देवान् सम्पूज्य प्रार्थयेत्क्रमात्"इत्युक्तं तेनाधुनिका विष्णवादीनावाह्य पूजयन्ति।

---

१ हे वरुण यजमानो हविर्भिर्धनादिकमाशास्ते तदर्थं त्वा त्वां यामि याचामि ब्रह्मणा त्रयीलक्षणेन वन्दमानः स्तुवानः किञ्च हे उरुशंस ऊरुर्महान् शंसः स्तुतिर्यस्य। अहेडमानोऽक्रुध्यन् सन् त्वं बोधि बुध्यस्व मत्प्रार्थनां जानीहि। किञ्च नोऽस्माकमायुर्मा प्रमोषीर्मा चोरय। पूर्णमायुश्च देहीत्यर्थः। श्लो० मकरस्थं पाशहस्तमर्णसां पतिमीश्वरम्। आवाहये प्रतीचीशं वरुण यादसां पतिम्।

* कलशस्य मुखे विष्णुः कण्ठे रुद्रः समाश्रितः। मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः। कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुन्धरा। † ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः। अङ्गैश्च सहिताः सर्वे कलशं तु समाश्रिताः। अत्र गायत्री सावित्री शान्तिः पुष्टिकरी तथा। आयान्तु मम शान्त्यर्थं दुरितक्षयकारकाः" इति। ततः कुम्भप्रार्थना। देवदानवसंवादे मथ्यमाने महोदधौ। उत्पन्नोऽसि तदा कुम्भ विधृतो विष्णुना स्वयम्। त्वत्तोये सर्वतीर्थानि देवाः सर्वे प्रतिष्ठिताः। त्वयि तिष्ठन्ति भूतानि त्वयि प्राणाः प्रतिष्ठिताः। शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्रा विश्वे देवाः सपैतृकाः। त्वयि तिष्ठन्ति सर्वेऽपि यतः कामफलप्रदाः। त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव। सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदा। नमो नमस्ते स्फटिक

---

* अत्र कलशस्य मुखे विष्णुरिति श्लोकात्पूर्वं "कलाः कला हि देवानां दानवानां कलाः कलाः। निगृह्य निर्मितो यस्मात्कलशस्तेन कथ्यते" इति श्लोकं पठन्ति तन्निर्मूलं मयूखादौ सर्वत्रानुपलब्धेः, कलशपदार्थो ह्यनेन निरूप्यते इति।

† अत्र वसुन्धरा १ ऋग्वेदोऽथ० २ इति श्लोकयोर्मध्ये एते श्लोका अधिका दृश्यन्ते। "अर्जुनी गोतमी चैव चन्द्रभागा सरस्वती। कावेरी कृष्णवेणा च गङ्गा चैव महानदी। तापी गोदावरी चैव महेन्द्री नर्मदा तथा। नदाश्च विविधा जाता नद्यः सर्वास्तथा ऽपराः। पृथिव्यां यानि तीर्थानि कलशस्थानि तानि वै। शान्तिः पुष्टिश्च गायत्री सावित्री कलशे स्थिता" इति।

प्रभाय सुश्वेतहाराय सुमङ्गलाय । सुपाशहस्ताय झषासनाय जलाधिनाथाय नमो नमस्ते । पाशपाणे नमस्तुभ्यं पद्मिनीजीवनायक । पुण्याहवाचनं यावत्तावत्त्वं सन्निधौ भव ॥

ततो यजमानः अवनिकृतजानुमण्डलः कमलमुकुलसदृशमञ्जलिं शिरस्याधाय (आचार्यः स्व) दक्षिणेन पाणिना सुवर्णपूर्णकलशं (यजमानाञ्जलौ) धारयित्वा दीर्घा नागा नद्यो गिरयस्त्रीणि विष्णुपदानि च । (आशिषः प्रार्थयते) तेनायुः प्रमाणेन (पुण्यं) पुण्याहं दीर्घमायुरस्तु । त्रीणि पदा विचक्रमे विष्णुर्गोपाऽअदाभ्यः । अतो धर्माणि धारयन् । तेनायुः प्रमाणेन (पुण्यं) पुण्याहं दीर्घमायुरस्तु (इति मन्त्रेण कलशं

---

अवनिकृतेति । इत आरभ्य मृकण्डसूनोरिति प्राक् आनुपूर्व्येणाश्वलायनगृह्यपरिशिष्टसूत्रम् । शौनकोऽपि । मेदिनीगतजानुस्तु सरोजमुकुलोपमम् । अञ्जलिं शीर्ष्णि त्वाधाय प्रणमेत्त्रिः पुनः पुनः । हस्ते कलशमुद्धृत्य नमेत्त्रीणि पदानि चेति । बिभ्रत्कुम्भमपां पूर्णं पिहिताननमर्चितमिति च तत्रैव । आचाय इति । धारयित्वेति णिजन्तनिर्देशात् । आचार्य उदकुम्भं तं धारयेत्तदनन्तरमिति परशुरामोक्तेश्च । सुवर्णपूर्णमिति । अत्र सुवर्णपदमन्येषां पञ्चपल्लवसर्वौषध्यादीनामुपलक्षकम् । पुण्यमिति । अयं पाठः

---

१ विष्णुर्यज्ञस्त्रीणि पदा पदानि विचक्रमे विक्रान्तवान् । किंभूतो विष्णुर्गोपा जगतो रक्षकः, अदाभ्योऽहिंस्यः । किं कुर्वन् । अतोऽस्मादेव पदत्रयाद्धर्माणि पुण्यानि कर्माणि धारयन् । धर्ममस्त्रियाम् । श्लो० विचक्रमे त्रीणि पदानि विष्णुर्गोपा अहिंस्यकः । अतः पदत्रयात्पुण्यं धारयन् कर्म शर्मदः ।

स्वशिरसा पत्नीशिरसा विवाहादौ संस्कार्यशिरसा च संयोज्य कलशस्थाने कलशं स्थापयित्वा पुनर्गृहीत्वा मन्त्रेण तथैव इति त्रिवारं कुर्यात् )

ततः कर्त्तोदङ्मुखानां युग्मब्राह्मणानां हस्तेषु "अपां मध्ये स्थिता देवाः सर्वमप्सु प्रतिष्ठितम्। ब्राह्मणानां करे न्यस्ताः शिवा आपो भवन्तु (मे) ते" इति उक्त्वा ॐ

---

परिशिष्टे हेमाद्यादौ च नास्ति। मन्त्रेणेति। त्रीणि पदेत्यस्य पाठे मूलं मृग्यं परिशिष्टादावनुपलम्भात्। त्रिवारमिति। अत्र मन्त्रोऽपि त्रिरावर्त्तनीयः। भेदे मन्त्रावृत्तिः सान्निपातित्वादिति कात्यायनोक्तेः।

उदङ्मुखानामिति। स्वयं प्राङ्मुखस्तानुदङ्मुखान्स्वस्ति वाचयेदित्याश्वलायनः। बौधायनेन तु कर्त्तोदङ्मुखो विप्राः प्राङ्मुखा इत्युक्तम्। अन्यत्राऽपि। पुण्याहवाचने युग्मा विप्रा वेदविदः शुभाः। यज्ञोपवीतिनः शस्ताः प्राङ्मुखाः स्युः पवित्रिणः। गन्धपुष्पार्चिताः शुद्धाः सोत्तरीयाः कुशायुधाः।

हस्तेष्विति। बौधायनः। अथ पुण्याहवाचनं व्याख्यास्याम इत्युपक्रम्य ततः सपवित्रेषु विप्रपाणिषु जलं दद्यादोमाप इति शिवा आपः सन्त्विति ते प्रत्यूचुस्ततो गन्धाः पान्त्विति गन्धं ददाति सुगन्धाः पान्त्विति प्रति गृह्णन्ति सुमनस इति पुष्पाणि ददाति सौमनस्यमस्त्विति प्रति गृह्णन्तीत्यादि। अत्र ददाति प्रति गृह्णन्तीति प्रयोगाद् हस्तपूजनमेतदिति गम्यते। वस्तुतस्तु ब्राह्मणपूजनमेतत्। जलादिदानं तु हस्ते एवोक्तसूत्रात्। यद्यपि बौधायनसूत्रे ऽर्वाक् ब्राह्मणपूजनमिति प्रतीयते तथापि कुम्भस्य प्रणामान्तपूजां विधाय ब्राह्मणपूजनं कर्त्तव्यम्। अथ शब्देन बद्धक्रमतया पदार्थोक्तिसमये स्वर्चितमिति कुम्भविशेषणस्यान्यथा ऽनुपपत्तेः। शिवा आपो भवन्तु ते इति। अक्षतं चास्तु, लक्ष्मीर्वसति, इति श्लोकयोर्मेशब्दप्रयोगादत्रापि मे

शिवा आपः सन्तु इति जलं दद्यात्। सन्तु शिवा आपः इति ब्राह्मणाः प्रतिवचनं ब्रूयुः। लक्ष्मीर्वसतु पुष्पेषु लक्ष्मीर्वसति पुष्करे। सा मे वसतु वै नित्यं सौमनस्यं तथाऽस्तु नः।

सौमनस्यमस्तु इति पुष्पं दद्यात्। अस्तु सौमनस्यम् इति ब्रा०। अक्षतं चास्तु मे पुण्यं दीर्घमायुर्यशो बलम्। यद्यच्छ्रेयस्करं लोके तत्तदस्तु सदा मम। "अक्षतं चारिष्टं चास्तु" इत्यक्षतान्दद्यात्। अस्त्वक्षतमरिष्टं च" इति ब्रा०। गन्धाः पान्तु सौमङ्गल्यं चास्तु। इति भवन्तो ब्रुवन्तु

---

इत्येव पाठो न तु ते इति। वस्तुतस्तु सर्वस्मिन्नपि पुण्याहवाचने प्रत्युक्ति वर्जयित्वा यजमानोक्तय एव सन्ति। अतोऽपि ते इत्येव पाठ्यम्। आस्तिकास्तु ते इति लिङ्गाद् एतच्छ्लोकपाठो द्विजकर्तृक इत्याहुः।

जलं दद्यादिति। अत्राश्वलायनगृह्यपरिशिष्टे शिवा आपः सन्त्वित्यादीनां वाचनमेवोक्तं न दानं तथापि बौधायनसूत्राच्छिष्टसमाचाराच्चोभयमेव कर्त्तव्यम्। जयन्तादिभिस्तु ब्राह्मणपूजनं प्रसिद्धमेवेति वाक्यवचनमपि नादृतम्। गन्धाः पान्तु सुमङ्गल्यं चास्तु इतिसमग्रमेव वाक्यं यजमानः एव पठेदिति परिशिष्टहेमाद्रिमयूखाद्यभिप्रायः। गन्धाः पान्तु इति वाक्यं यजमानस्य, सुमङ्गल्यं चास्तु इति ब्राह्मणानामिति संस्काररत्नमालासंस्कारचिन्तामणिसंस्कारभास्करप्रभृतयः। गन्धाः पान्तु सुमङ्गल्यं चास्तु इति भवन्तो ब्रुवन्तु इति यजमानोक्त्यनन्तरं गन्धाः पान्तु सुमङ्गल्यं चास्तु इति ब्राह्मणा ब्रूयुरिति वाक्यद्वयं सर्वैर्वक्तव्यमिति कश्चित्। अत्र मूलं मृग्यम्।

अक्षतंचारिष्टमिति। लाजाः पुं भूम्नि चाक्षता इत्यमरकोशादक्षतशब्दस्य बहुवचनान्तस्य पुंस्त्वम्। एकवचनान्तस्य तु क्लीबत्वमेव। अरिष्टमहिंसा। रुष रिष हिंसायां भावे क्तः। अरिष्टं सूति-

इति गन्धं द० । गन्धाः पान्तु सौमङ्गल्यं चास्तु इति ब्रा० । अक्षताः पान्तु आयुष्यमस्तु (इति भव०) इत्यक्षतान्दद्यात् । अक्षताः पान्तु आयुष्यमस्तु इति ब्रा० । पुष्पाणि पान्तु सौश्रियमस्तु (इति भ० इति) पुष्पाणि दद्यात् । पुष्पाणि पान्तु सौश्रियमस्तु इति ब्रू० । (सफल) ताम्बूलानि पान्तु ऐश्वर्यमस्तु (इति भव०) इति फलं ताम्बूलं च दद्यात् । सफलताम्बूलानि पान्तु ऐश्वर्यमस्तु इति ब्रू० । दक्षिणाः पान्तु बहु देयं चास्तु (इति भ०) इति दक्षिणां दद्यात् । दक्षिणाः पान्तु बहुदेयं चास्तु इति ब्रू० । (स्वर्चितमस्तु इति जलं दद्यात् । अस्त्वर्चितमिति ब्रा० ।) दीर्घमायुः शान्तिः पुष्टिस्तुष्टिः श्रीर्यशो विद्या विनयो वित्तं बहुपुत्रं बहुधनं चायुष्यं चास्तु इति वाक्येन विप्रान्प्रार्थयेदिति सम्प्रदायः । ततः कर्त्ता यं कृत्वा सर्ववेदयज्ञक्रियाकरणकर्मारम्भाः शुभाः शोभनाः प्रवर्त्तन्ते तमह-

---

कौमृहमित्यमरोक्तं वा । सौमङ्गल्यमिति । भावे ष्यञ् । सुमङ्गल्यमिति पाठस्तु सुमङ्गलाय हितमिति हिते ऽर्थे यत्प्रत्येन साधनीयः । सौश्रियमिति । सुश्रियो भावः सौश्रियं भावे ष्यञ् । ह्रस्व आर्षः । ताम्बूलानीति । अत्र ताम्बूलानीत्याश्वलायनगृह्यपरिशिष्टे पाठात्ताम्बूलं पातु इत्येकवचनान्तप्रयोगो न सम्मतः । अत एव सफलानीत्यपि पृथगेव सविभक्तिकं प्रयोज्यम् ।

यं कृत्वेति । परशुरामः । यं कृत्वा सर्ववेदादिक्रियाः सर्वाः सुशोभनाः । प्रवर्त्तन्ते तमोङ्कारमादिं कृत्वा ऽत्र पुण्यदम् । पुण्याहं वाचयिष्येऽहं वाच्यतामिति चोदिते इति । अत्र क्षत्रियवैश्ययोः पुण्याहवाचनं यं कृत्वेत्यारभ्य आदिं कृत्वेत्यन्तं न पठनीयम् । पुण्याह-

मोङ्कारमादिं कृत्वा ऋग्यजुः सामा ( थर्वा ) शीर्वचनं बहूवृषिमतं समनुज्ञातं भवद्भिरनुज्ञातः पुण्यं पुण्याहं वाचयिष्ये इति वदेत् । वाच्यताम् इति विप्राः । ततः कर्त्ता

---

वाचनं सर्वं ब्राह्मणस्य विधीयते । तदेव च निरोङ्कारं कुर्यात्क्षत्रियवैश्ययोरिति यमोक्त्या तयोर्निरोङ्कारस्य विधानात् । अथवा तमहमोङ्कारमादिमकृत्वेति पठनीयम् । आदिं कृत्वा आदौ कृत्वेत्यर्थः । स्त्रिया अप्येवमिति केचित् । वस्तुतस्तु स्त्रीणां ब्राह्मणद्वारैव पुण्याहवाचनाभ्युदयिके इत्युक्तम् । शूद्रे तु केवलं स्वस्तिशब्दः प्रयोज्यो न पुण्याहादि । तस्य तावतैव पुण्याहवाचनसिद्धेः । सोङ्कारं ब्राह्मणे कुर्यान्निरोङ्कारं महीपतौ । उपांशु च तथा वैश्ये स्वस्ति शूद्रे प्रकीर्त्तयेदिति रुद्रकल्पद्रुमे यमोक्तेः ।

ऋग्यजुरिति । आश्वलायनगृह्यपरिशिष्टे रुद्रकल्पद्रुमादौ च ऋग्यजुः सामाशीर्वचनमित्येवोक्तं तेनात्राथर्वणमन्त्रपाठे मूलं मृग्यम् । समनुज्ञातमिति । सं विज्ञातमिति दानखण्डे पाठः ।

ऋग्वेदिनः । ॐ द्रविणोदा द्रविणसस्तुरस्य द्रविणोदाः सनरस्य प्र यंसत् । द्रविणोदा वीरवतीमिषं नो द्रविणोदा रासते दीर्घमायुः १ सविता पश्चात्सविता पुरस्तात्सवितोत्तरात्तात्सविताऽधरात्तात् । सविता नः सुवतु सर्वतातिं सविता नो रासतां दीर्घमायुः २ नवो नवो भवति जायमानोऽह्नां केतुरुषसामेत्यग्रम् । भागं देवेभ्यो विदधात्यायन्प्रचन्द्रमास्तिरते दीर्घमायुः ३ उच्चा दिवि दक्षिणावन्तोऽअस्थुर्येऽअश्वदाः सह ते सूर्येण । हिरण्यदा अमृतत्वं भजन्ते वासोदाः सोम प्र तिरन्त आयुः ॥ ४ ॥

सामवेदिनः । ॐदेवो३वो३द्रविणो दाः पूर्णां विवष्ट्वासिचम् । ऊद्ध्वा १ सिञ्चा २ । ध्वमुपवापृणध्वम् । आदिद्वोदे २ । व ऊहते । इडा २. ३ भा ३. ४. ३ । ऊँ २. ३. ४. ५. इ । डा ॥ १ ॥

ॐ द्रविणोदाः पिपीषति जुहोत प्र च तिष्ठत। नेष्ट्राद्दतु-
भिरिष्यत ॥ २६-२२ ॥ सविता त्वा सवानाᳬं सुवतामग्नि-
र्गृहपतीनाᳬं सोमो व्वनस्पतीनाम्। बृहस्पतिर्व्वाचऽ इन्द्रो
ज्यैष्ठ्याय रुद्रः पशुभ्यो मित्रः सत्यो व्वरुणो धर्म्मपतीनाम्
॥९-३९॥ न तद्रक्षाᳬंसि न पिशाचास्तरन्ति देवानामोजः
प्रथमजᳬं ह्येतत्। यो बिभर्त्ति दाक्षायणᳬं हिरण्यᳬं स दे-
वेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः॥३४-५१॥

---

अद्य नो देव सवितः। ओ हो वा। इह श्रुधायि। प्रजावा
२. ३. त्सा। वीः सौभगाम्। परादू २. ३. ष्वा ३। हो वा ३ हा।
प्रियᳬं सु २. ३. ४. ५ वा ६. ५. ६. दत्ता ३. या. २. ३। ४ ५. ॥२॥

चन्द्रमाआउवा। सुवान्ताराउवा। सुपर्णोधाउवा। वतेदिवि।
नवोहि राउवा। एयनायिमा याउवा। पदं विन्दाउवा। तिवि-
द्युता। वित्तंमा आउवा। स्यरोदा २ ३. ला ३. ४. ३. यि। उँ २.
३. ४. ५ इ। डा ॥ ३ ॥

उच्चा ता३यि जातमन्धसाः। दिवा इसा १ द्भू २। मिया. २ ३
द्दाइ। उग्रँ शर्मा। महा. २. ३. यि श्रवाउ। वा ३। स्तौषे २ ३.
४. ६. ५ ॥ ४ ॥

उपा ५. स्मै। गा ३ या ३. तानारा। पा. ३. वामा ३. ना।
या २. ३. आ। इुस्मायि। दा ३ वायि.। अभि देवाँ इया २.
क्षताउ। वा. ३ ४. ५. ॥ ५ ॥

अथर्ववेदिनः। ॐ धाता रातिः सवितेदं जुषन्तां प्रजापतिर्निधि-
पतिर्नो ऽग्निः। त्वष्टा विष्णुः प्रजाया संरराणो यजमानाय द्रविणं
दधातु, १ अभयं द्यावापृथिवी इहास्तु नो ऽभयं सोमः सविता नः
कृणोतु। अभयं नोस्तूर्वान्तरिक्षं सप्तऋषीणां च हविषा ऽभयं नोऽ-
अस्तु २ नवोनवो भवसि जायमानोऽह्नां केतुरुषसामेष्यग्रम्। भागं

उच्चा ते जातमन्धसो दिवि सद् भूम्या ददे। उग्रꣳ शर्म महि श्रवः॥२६–१७॥ उपास्मै गायता नरः पवमानायेन्दवे। अभि देवाँ इयक्षते॥३३×६२॥ (इति मन्त्रानुक्त्वा) व्रतजपनियमतपःस्वाध्यायक्रतुदयादमशमदानविशिष्टानां सर्वेषां ब्राह्मणानां मनः समाधीयताम् (इति) विप्रान्प्रार्थयेत्। समाहितमनसः स्मः (इति विप्राः)। (कर्ता) प्रसीदन्तु भवन्तः इति वदेत्। प्रसन्नाः स्मः (इति विप्राः)। (ततो यजमानो वक्ष्यमाणैकसप्ततिवावाक्यानि पठन् प्रतिवाक्यं पात्रे जलं पातयेत् तत्रारिष्टनिरसनमस्तु यत्पापमिति द्वाभ्यां, हताश्च ब्रह्मद्विष इत्यादिभिः सप्तवाक्यैश्च पात्राद्बहिरुत्तरतो जलं पातनीयमिति सम्प्रदायः) शान्तिरस्तु१ पुष्टि-

---

देवेभ्यो विदधास्यायन्प्रचन्द्रमस्तिरसे दीर्घमायुः २ उच्चैर्घोषो दुन्दुभिः सत्वनायन् वानस्पत्यः सम्भृत उस्रियाभिः। वाचं क्षुणवानो दमयन्त्सपत्नान् सिंह इव ज्येष्यन्नभितं स्तनीहि॥ ४॥

मनः समाधीयतामिति। मनः समाधीयतामित्यध्वर्योः प्रैषपचकः। समाहितमनसः स्मः प्रतिप्रैषो ऽयमृत्विजाम्। प्रसीदन्तु भवन्तो ऽथ प्रसन्नाःस्म इति द्विजाः इति परशुरामः। अत्र प्रैषे ऽध्वर्युकर्त्तृकत्वं वैकल्पिकं तेन स्वकर्त्तृके स्वयं प्रैषाः कार्या इत्यनन्तः। अध्वर्युराचार्यः।

जलं पातनीयमिति। अत्र वाराणसेया याज्ञिकाः कलशोपर्यक्षतानपि क्षिपन्ति। वस्तुतस्तु एषां वाचनमेव। दानखण्डे वाचनस्यैवोक्तत्वात्। तेन जलपातनमक्षतप्रक्षेपो वा ऽनाकरमेवेति।

शान्तिरस्त्विति। आधारे धारायां चादिसंयोग इत्यापस्तंबसूत्रोक्तेर्मन्त्रारम्भसमकालं कर्मारम्भः कार्यो न तु मन्त्रान्ते इति

रस्तु २ तुष्टिरस्तु ३ वृद्धिरस्तु ४ अविघ्नमस्तु ५ आयुष्य-
मस्तु ६ आरोग्यमस्तु ७ (शिवमस्तु) ८ शिवं कर्मास्तु ९
कर्मसमृद्धिरस्तु १० धर्मसमृद्धिरस्तु ११ (वेदसमृद्धिरस्तु
१२ शास्त्रसमृद्धिरस्तु १३) धनधान्यसमृद्धिरस्तु १४ (पुत्र-
पौत्रसमृद्धिरस्तु १५) इष्टसम्पदस्तु १६ (बहिः) अरिष्टनि-
रसनमस्तु १७ यत्पापं (रोगोऽशुभमकल्याणं) तत् (दूरे)
प्रतिहतमस्तु १८ (अन्तः) यत् (यत्) श्रेयस्तदस्तु १९
उत्तरे कर्मणि निर्विघ्नमस्तु २० उत्तरोत्तरमहरहरभिवृद्धि-
रस्तु २१ उत्तरोत्तराः क्रियाः शुभाः (शोभनाः) सम्प-
द्यन्ताम् २२ तिथिकरणमुहूर्त्तनक्षत्र (ग्रहलग्न) सम्पदस्तु
२३ तिथिकरणमुहूर्त्तनक्षत्रग्रहलग्नाधिदेवताः प्रीयन्ताम्

---

बोध्यम्। अत्र विप्राः अस्तु, सम्पद्यन्तां, प्रीयन्तां, प्रीयेतां, प्रीयतां, हताः, यान्तु, शाम्यन्तु, वर्धन्तां, सन्तु, स्यातां, वर्षतु, पच्यन्तां, कल्पताम्, इति कर्तृवाक्यानुरोधेन प्रतिवचनानि दद्युः। शिवमस्त्विति। हेमाद्रौ दानखण्डे आश्वलायनगृह्यपरिशिष्टे च ८।१२। १३।१५।४६।४८।६१।६८।६९।७०।७१। एतत्सङ्ख्याकानि वाक्यानि न सन्ति।

यत्पापमिति। अत्र यत्पापं तत्प्रतिहतमस्त्विति दानखण्डे पाठः। अत्र रोगमित्यपाठः। रोगशब्दस्य पुंलिङ्गत्वात्। यद्यच्छ्रेय इति। यच्छ्रेयस्तदस्त्विति दानखण्डे पाठः। उत्तरे इति। उत्तरे कर्मण्यविघ्नमस्त्विति दानखण्डे पाठः। उत्तरोत्तरा इति। अत्र शोभना इति पाठो दानखण्डे नास्ति। तिथिकरणेति। अत्र त्रयोविंशतितमे वाक्ये "ग्रहलग्न" इति पाठः परिशिष्टे नास्ति।

२४ तिथिकरणे (स) मुहूर्त्ते सनक्षत्रे सग्रहे (सलग्ने) साधिदेवते प्रीयेताम् २५ दुर्गापाञ्चाल्यौ प्रीयेताम् २६ अग्निपुरोगा विश्वे देवाः प्रीयन्ताम् २७ इन्द्रपुरोगा मरुद्गणाः प्रीयन्ताम् २८ ब्रह्मपुरोगाः सर्वे वेदाः प्रीयन्ताम् २९ विष्णुपुरोगाः सर्वे देवाः प्रीयन्ताम् ३० माहेश्वरीपुरोगा उमामातरः प्रीयन्ताम् ३१ वसिष्ठपुरोगा ऋषिगणाः प्रीयन्ताम् ३२ अरुन्धतीपुरोगा एकपत्न्यः प्रीयन्ताम् ३३ ब्रह्म च ब्राह्मणाश्च प्रीयन्ताम् ३४ श्रीसरस्वत्यौ प्रीयेताम् ३५ श्रद्धामेधे प्रीयेताम् ३६ भगवती कात्यायनी प्रीयताम् ३७ भगवती माहेश्वरी प्रीयताम् ३८ भगवती पुष्टिकरी प्रीयताम् ३९ भगवती तुष्टिकरी प्रीयताम् ४० भगवती ऋद्धिकरी प्रीयताम् ४१ भगवती वृद्धिकरी प्रीयताम् ४२ भगवन्तौ विघ्नविनायकौ प्रीयेताम् ४३ सर्वाः कुलदेवताः प्रीयन्ताम् ४४ सर्वा ग्रामदेवताः प्रीयन्ताम् ४५ सर्वा इष्टदेवताः प्रीयन्ताम् ४६ (बहिः) हताश्च ब्रह्मद्विषः ४७ हताश्च परिपान्थिनः ४८ हताश्च विघ्नकर्तारः ४९ शत्रवः पराभवं यान्तु ५० शाम्यन्तु घोराणि ५१ शाम्यन्तु पापानि ५२ शाम्यन्त्वीतयः ५३ (अन्तः) शुभानि वर्द्धन्ताम् ५४ शिवा आपः सन्तु ५५ शिवा ऋतवः सन्तु ५६ शिवा अग्नयः सन्तु ५७ शिवा

---

ब्रह्मद्विष इति । अत्र हता विद्विष इति हेमाद्रौ पाठः ।

---

[१] अतिवृष्टिरनावृष्टिर्मूषकाः शलभाः शुकाः ।
प्रत्यासन्नाश्च राजानः षडेता ईतयः स्मृताः ।

आहुतयः सन्तु ५८ शिवा वनस्पतयः शन्तु ५९ शिवा ओषधयः सन्तु ६० शिवा अतिथयः सन्तु ६१ अहोरात्रे शिवे स्याताम् ६२ निकामे निकामे नः पर्जन्यो ऽवर्षतु फलवत्यो नऽ ओषधयः पच्यन्तां योगक्षेमो नः कल्पताम् ६३ ( शुक्राङ्गारकबुधबृहस्पतिशनैश्चरराहुकेतुसो-

---

शुक्राङ्गारकेति । भूपिण्डे मध्यभागस्थिताद्रवेरूर्ध्वं शुक्रसौम्यसत*मोविधूनामधश्च कुजगुरुमन्दानामवस्थितत्वादूर्ध्वाधःक्रमेण विनाद्यन्तमेकैकग्रहग्रहणात् आनन्तर्यन्यायेन लाघवाच्छनिसतमोविधुग्रहणात् शुक्राङ्गारेतिपाठः साधीयान् । एतत्सर्वं सिद्धान्तशिरोमणौ स्पष्टम् । दानखण्डे तु आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्तामित्येतावानेव पाठः । एतत्कल्याणयुक्तमिति । दानखण्डे पुण्याहकालान् वाचयिष्ये इत्येव पाठः ।

ऋक् । शं वः कनिक्रदद्देवः पर्जन्यो अभिवर्षत्वोषधयः प्रति धीयताम् । शन्नो द्यावापृथिवी शं प्रजाभ्यः शं नो अस्तु द्विपदे शं चतुष्पदे ॥ १ ॥

साम । त्वष्टा ३. ४ नो दै वियम् । वचाः । पर्जन्यो ब्रह्मणस्पा. २. ३. तीः । पुत्रैर्भ्रातृभिरदिति नू पातू २. ३. नाः । दुष्टारा २३. न्त्रा । मेणं वा. २. ३. । चा. ३. ४. ३. । ॐ २. ३. ४. ५. इ । डा ॥ १ ॥

---

१ पर्जन्यो नो ऽस्माकं निकामे निकामे नितरां कामनायां सत्यां वर्षतु । नो ऽस्माकमोषधयो यवाद्याः फलवत्यः फलयुक्ताः पच्यन्ताम् । नो ऽस्माकं योगेन युक्तः क्षेमो योगक्षेमः कल्पतां क्लृप्तो भवतु अलभ्यलाभो योगः लब्धस्य परिपालनं क्षेमः ।

* तमोग्रहौ राहुकेतू ।

मसहिता ) आदित्यपुरोगाः सर्वे ग्रहाः प्रीयन्ताम् ६४ भगवान्नारायणः प्रीयताम् ६५ भगवान्पर्जन्यः प्रीयताम् ६६ भगवान्स्वामी महासेनः प्रीयताम् ६७ ( पुरोऽनुवाक्यया यत्पुण्यं तदस्तु ६७ याज्यया यत्पुण्यं तदस्तु ६८ वषट्कारेण यत्पुण्यं तदस्तु ७० प्रातः सूर्योदये यत्पुण्यं तदस्तु ७१ ) ततः कर्त्ता "एतत्कल्याणयुक्तं ( पुण्यं ) पुण्याहं वाचयिष्ये" इति वदेत् । "वाच्यताम्" इति विप्राः ।

( यज० ) ब्राह्मं पुण्यमहर्यच्च सृष्ट्युत्पादनकारकम् । वेदवृक्षोद्भवं नित्यं तत्पुण्याहं ब्रुवन्तु नः । भो ब्राह्मणाः मम सकुटुंबस्य सपरिवारस्य गृहे करिष्यमाणसप्रासादसवाहन ( पञ्चायतन ) शिवाद्यचलप्रतिष्ठाकर्मणः पुण्याहं भवन्तो ब्रुवन्तु ।। " ॐ पुण्याहम् " इति त्रिर्विप्रा ब्रूयुः ।

---

अथर्व । त्वष्टा मे दैव्यं वचः पर्जन्यो ब्रह्मणस्पतिः । पुत्रैर्भ्रातृभिरदितिर्नु पातु नो दुष्टरं त्रायमाणं सहः ॥ १ ॥

भो ब्राह्मणा इति । इदं वाक्यं क्रमेण मन्द्रमध्यमोच्चस्वरेण त्रिः कर्त्रा वक्तव्यं । विप्रैश्च पुण्याहादिशब्दास्तथैव वक्तव्या इति रुद्रकल्पद्रुमे । ॐमुक्तिपूर्वात्पुण्याहं भवन्त इति भाषितात् । परं, ब्रूयुश्च ते सर्वे ॐ: पुण्याहमपीति च । तदनु त्रिस्त्रिरेकैकं पुण्याहादिचतुष्टयम् । प्रातर्मध्यतृतीयैस्त्रिः सवनैरुत्तरोत्तरैः । प्राहास्य यजमानस्य गृहे पुण्याहमृत्विजः । भवन्तोऽत्र ब्रुवन्त्वेवं त्रिः पुण्याहं ब्रुवन्ति ते । तद्वत्कल्याणमृद्धिं च स्वस्ति त्रिस्त्रिः पृथक् पृथगिति । शौनककारिकायाम् । पुण्याहादेस्त्रिरभ्यासं मन्द्रमध्योच्चनिःस्वनैः । आश्रयेरन्निमे सर्वे यथाऽऽगमपरम्परा इति । अत्रागमशब्देनागमज्ञा आचार्या उच्यन्ते ।

(यज०) ॐ पुनन्तु[1] मा देवजनाः पुनन्तु मनसा धियः । पुनन्तु विश्वा भूतानि जातवेदः पुनीहि मा । (यज०) पृथिव्यामुद्धृतायां तु यत्कल्याणं पुरा कृतम् । ऋषिभिः सिद्धगन्धर्वैस्तत्कल्याणं ब्रुवन्तु नः । भो ब्राह्मणाः मम सकु० कर्मणः कल्याणं भवन्तो ब्रुवन्तु । इति त्रिः कर्त्ता वदेत् "ॐ कल्याणम्" इति त्रिर्विप्राः (यज०) ॐ यथेमां[2] वाचं कल्या-

---

अत्र यथागमपरम्परेति वचनमाश्रित्य दानखण्डे अनुक्तमपि कल्याणवाचनं, स्वस्तिऋद्ध्योर्विपर्यासं, ब्राह्मं पुण्यमित्यादयः श्लोकाश्चाधिकाः परशुरामादिभिरुक्ता इति बोध्यम् ।

ऋक् । उद्गातेव शकुने साम गायसि ब्रह्मपुत्रइव सवनेषु शंससि ।
वृषेव वाजी शिशुमतीरपीत्या सर्वतो नः शकुने भद्रमावद
विश्वतो नः शकुने पुण्यमावद ॥ १ ॥

साम । पुनानः सोमा३ धारा. २. ३. ४. या. । आपो वसानो अर्षस्यारत्नधायोनिमृतस्य सा२यिद सायि । ऊँहा. ३. उवा । उत्सो देवोहिरा २ ३. हायि । ऊँहा ३ उवा । एयया । ऊँ३हो वा । हो ५. इ । डा ॥ १ ॥

अथर्व । पुनन्तु मा देवजनाः पुनन्तु मनवो धिया । पुनन्तु विश्वा
भूतानि पवमानः पुनातु मा ॥ १ ॥

---

१ देवानां जना देवजना देवसेनानुगामिनो जना मा मां पुनन्तु, मनसा सह धियो बुद्धयः कर्माणि वा मां पुनन्तु, विश्वा विश्वानि सर्वाणि भूतानि मां पुनन्तु, हे जातवेदस्त्वमपि मां पुनीहि १९।३९। श्लो० दीयन्ते यत्र दानानि पूज्यन्ते च द्विजातयः । दृश्यते यत्र माङ्गल्यं तत्पुरायाह सदाऽस्तु मे । अत्र परशुरामेण पुनस्त्वेति मन्त्र उक्तः । पुनस्त्वाऽथ यथेमामृक् सत्रस्य स्वस्ति नः क्रमात् । पठितव्या ऋचः प्रान्ते पुण्याहादिचतुर्ष्वपीति ।

२ इमां कल्याणीं अनुद्वेगकरीं वाचमहं यथा यतः आवदानि सर्वतो

णीमावदानि जनेभ्यः। ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च स्वाय चारणाय च। प्रियो देवानां दक्षिणायै दातुरिह भूयासमयं मे कामः समृध्यतामुप मादो नमतु ॥ (यज०) सागरस्य तु या ऋद्धिर्महालक्ष्म्यादिभिः कृता। सम्पूर्णा सुप्रभावा च तां च ऋद्धिं ब्रुवन्तु नः। भो ब्राह्मणाः मम

---

ऋक् । अपाः सोममस्तमिन्द्र प्र याहि कल्याणीर्जाया सुरणं गृहे ते । यत्रा रथस्य बृहतो निधानं विमोचनं वाजिनो दक्षिणावत् ॥ २ ॥

साम । काया। नश्चा. ३ इत्रा ३ आभुवात्। ऊ। तीसदावृधः स। खा।ऊँ ३ हो हा ई। कया. २३ शचा इ। ष्ठयौ हो३ । हुम्मा. २। वा २र्तो. ३. ५ हाइ। २ ॥

अथर्व । विश्वजित्कल्याण्यै मा परिधेहि । कल्याणि द्विपाच्च सर्वं नो रक्ष चतुष्पाद्यच्च न स्वम् ॥ २ ॥

ऋक् । ऋध्याम स्तोमं सनुयाम वाजमानो मन्त्रं सरथेहोप यातम्।

---

ब्रवीमि "दीयतां" "भुज्यताम्" इति सर्वेभ्यो वच्मि—केभ्यः ब्रह्मराजन्याभ्यां ब्रह्मणे ब्राह्मणाय राजन्याय क्षत्रियाय च शूद्राय अर्याय वैश्याय स्वाय आत्मीयाय अरणाय पराय अरणोऽपगतोदकः शत्रुः, नास्ति रणः शब्दो येन वा वाक्संबन्धरहितः शत्रुरिति वा । प्रियो देवानां मध्ये, अत्र तथा इत्यध्याहर्त्तव्यम् । यतोऽहं ब्राह्मणादिभ्यः कल्याणीं वाचं वदामि तथा ततः अहं देवानां प्रियः भूयासम्। इह संसारे दक्षिणायै दक्षिणाया दातुश्च प्रियः भूयासम्। देवाः दक्षिणादातारश्च मयि प्रीतिं कुर्वन्तु । किञ्च मे ममाय कामः समृद्ध्यतां सफलो भवतु । अयमिति नामनिर्देशः। धनपुत्रादिलाभकामो मे सम्पद्यताम् । किञ्च अदो मा माम् उप नमतु । अद इति इष्टनामग्रहणम् । देवदत्तादिः मां प्रणियतु ॥२६–३॥ ॥ ॥

श्लो०—पुत्रपौत्रकलत्रादिद्विपदाश्च चतुष्पदाः। तिष्ठन्ति यत्र भृत्याद्यास्तत्कल्याणं सदाऽस्तु मे ।

सकु० कर्मणः ऋद्धिं भ० । इति त्रिः कर्त्ता । ॐ ऋद्ध्यताम् इति त्रिर्विप्राः। (यज०)सत्रस्यऽऋद्धिरस्यगन्म ज्योतिरमृताऽअभूम । दिवं पृथिव्याऽ अद्ध्यारुहामाविदाम देवान्त्स्वर्ज्योतिः । ( यज० ) स्वस्तिस्तु या ऽविनाशाख्या पुण्यकल्याणवृद्धिदा । विनायकप्रिया नित्यं तां च स्वस्तिं ब्रुवन्तु नः । भो ब्राह्मणाः मम सकु० कर्मणे स्वस्ति

---

यशो न पक्वं मधु गोष्वन्तरा भूतांशो अश्विनोः काममप्राः ॥ ३ ॥

साम । ॐ होवा ॐ होवा ॐ हो३वा । अगन्म ज्योतिः । अगन्म ज्योतिः । अगन्म ज्योतिः । अमृता अभूम । अमृता अभूम । अमृताऽ अभूमा न्तरिक्षं पृथिव्या अध्यारुहामान्तरिक्षं पृथिव्या अध्यारुहामा । न्तरिक्षं पृथिव्या अध्यारुहामा । दिवमन्तरिक्षादध्यारुहाम ।३। अविदाम देवान् ।३। समुदेवैरगन्महि ।३। ॐ होवा ॐहोवा. ॐ ३ होवा ।३। सुवर्ज्योती २. ३. ४. ५.॥ ३ ॥

अथ० । ऋधङ् मन्त्रो योनिं य आ बभूवामृतासु वर्द्धमानः सुजन्मा । अदब्धासुर्भ्राजमानो हेव त्रितो दाधार त्रीणि ॥ ३ ॥

कर्मणे स्वस्तीति । वकारश्च चतुर्थ्यन्तं तत्तन्नामोक्तिपूर्वकम् । स्वस्तीति च प्रतिब्रूयुरथ सर्वेऽपि ते द्विजा इति संस्कारगणपतौ । अत्र नमः स्वस्ति स्वाहेत्यादिना स्वस्तियोगे चतुर्थी । अव्ययादाप्सुप इति विभक्तेर्लुक् । पारिजातादयो ऽप्येवम् । केचित्तु कर्त्रे मह्यं स्वस्ति भवन्तो ब्रुवन्तु, आयुष्मते मह्यं स्वस्ति भवन्तो ब्रुवन्तु इति वाक्यं प्रयुञ्जते । एवं च आयुष्मते स्वस्तीत्यादि प्रतिवचनमप्युपपद्यते ।

---

१ ऋद्ध्यतामिति । प्रत्युक्तिविषये भेदस्तृतीये ऋद्ध्यतामिति । तुर्ये श्रीरस्त्विति ब्रूयादस्तु श्रीरिति च द्विजा इति परशुरामः । अथ मन्त्रार्थः

भवन्तो ब्रुवन्तु । इति त्रिः कर्त्ता वदेत् । ॐ आयुष्मते स्वस्ति" इति त्रिर्विप्रा ब्रूयुः ।

स्वस्ति नऽ इन्द्रो वृद्धश्रवाः स्वस्ति० (पृ० १३ पं० ५)

---

नह्यत्र कर्मण आयुराशास्यते । सर्वस्य श्रीऋद्ध्यादेः स्वसम्बन्धित्वेनेष्यमाणतया प्रायस्तस्यापपाठादिति । वस्तुतस्तु मह्यमित्येवं प्रयोगाभावपक्षे कर्मणः स्वस्त्याकाङ्क्षायां कर्मणे इति चतुर्थी प्रयोगः परिजातादावुक्त इति न काऽप्यनुपपत्तिः । मह्यमिति प्रयोगे तु स्वस्तियोगे मह्यमित्यत्र चतुर्थ्यां निराकाङ्क्षत्वेन कर्मशब्दे चतुर्थ्युत्पत्तौ मानाभावः । तेन मह्यमित्यस्य कर्मण इत्यनेन सहान्वये अमुककर्मणः कर्त्रे मह्यं स्वस्ति भवन्तो ब्रुवन्त्विति वाक्यं योजनीयम् । तेनात्रामुककर्मणः कर्त्रे मह्यमिति पक्षे आयुष्मते स्वस्तीति प्रतिवचनं, कर्मणे स्वस्तीति पक्षे तु केवलं स्वस्तीति प्रतिवचनमिति विवेकः । स्वस्तिस्तु या ऽविनाशाख्येत्यादौ तु स्वस्तिशब्दो ऽनव्ययस्तथैव पुराणे पाठात् ।

ऋक्० । स्वस्तिरिद्धि प्रपथे श्रेष्ठा रेक्णस्वत्यभिया वाममेति ।
सा नो अमासोऽ अरणे नि पातु स्वावेशा भवतु देवगोपा ॥ ४ ॥

---

हे ( साम ) सत्रस्य ऋद्धिः समृद्धिः स्वमसि अतो वयं ज्योतिः—आदित्यलक्षणम् अगन्म—प्राप्ताः ततः अमृता. अमरणधर्माणः अभूम भूता., पृथिव्याः सकाशात दिवं लोकम् अध्यारुहाम अध्यारूढाः । ततो देवान् इन्द्रादीन् अविदाम जानीमः पश्याम इत्यर्थः ज्योतिः ज्योतीरूप स्वः स्वर्गञ्च अविदाम ॥८-११॥ श्लो०—धनं धान्यं तथा धर्मो निधिः कोशो गृहाणि च । ध्रुवाणि यत्र तिष्ठन्ति सा ऋद्धिः सर्वदा ऽस्तु मे ।

१ श्लो०—दीर्घायुष्ट्व च यत्रास्ति माङ्गल्यं यत्र तिष्ठति । दीप्ति र्लक्ष्मीश्च तत्स्वस्ति सर्वदा ऽस्तु गृहे तव ।

(दानखण्डे एतावदेव पुण्याहवाचनम्)॥ मृकण्डसूनोरायुर्यद् ध्रुवलोमशयोस्तथा। आयुषा तेन संयुक्ता जीवेम शरदः शतम्। "शतं जीवन्तु भवन्तः" (इति विप्राः) शतमिन्नु श०॥५॥ (पृ० १४ पं० ५) शिवगौरीविवाहे या या श्री रामे नृपात्मजे। धनदस्य गृहे या श्रीरस्माकं सा ऽस्तु

---

साम०। त्रातारमिन्द्रमविता। रमी २-३न्द्राम्। हवेहवे सुहवा ५ शूरमी २-३न्द्राम्। हुवाइनुशक्रंपुरुहू। तमी २-३- न्द्राम् इदाँ स्वस्ति नो मघवा। वा४ ३-२-इतू ३वा ५ इन्द्रा ६-५ ६ः॥४॥

अथ०। स्वस्ति मात्र उत पित्रे णो अस्तु स्वस्ति गोभ्यो जगतेभ्यः। विश्वं सुभूतं सुविदत्रं नो ऽअस्तु ज्योगेव दृशेम सूर्यम्॥४॥

एतावदेवेति। सम्प्रदायमनुसृत्य मृकण्डसूनोरित्यादिकमपि लिख्यते। अत्र "पुण्यं कल्याणमृद्धिं च स्वस्ति श्रीरिति पञ्चकम्" इति संस्कारभास्करवचनात् भो ब्राह्मणा अस्य कर्मणः श्रीरस्त्विति भवन्तो ब्रुवन्तु। अस्तु श्रीः। मनसः काममा० इति श्रीवाचनमिच्छन्ति। प्रायो ऽयं दक्षिणात्यसम्प्रदायः। तत्त्वं तु परिशिष्टोक्तस्वस्त्यन्तपुण्याहवाचनपक्षे श्रीवाचनमपि पृथगिच्छया कार्यम्। मृकण्डसूनोरिति पक्षाश्रयणे तु न पथक् श्रीवाचनं, शिवगौरी विवाहे येत्यनेनैव गतार्थत्वादिति"। प्रीयतामिति। बौधायनोक्ततत्तत्कर्मदेवतानाम प्रथमया विभक्त्या सङ्कीर्त्य प्रीयतां प्रीयेतां प्रीयन्तामिति देवतैकत्वाद्यनुसारेणोक्त्वा पात्रे जलं क्षिपेत् न तु कलशोपरीति ध्येयम्। इदं पुण्याहवाचनान्ते युक्तम्। रत्नाशिष इति। रत्ना रमणीया आशिष इत्यर्थः। दत्ताशिष इति क्वाचित्कः पाठः। देवेन्द्रस्येति श्लोकः प्राचीनपुस्तकेषु नास्ति।

ऋक्०। शतं जीव शरदो वर्द्धमानः शतं हेमन्ताञ्छतमु वसन्ता३न्। शतमिन्द्राग्नी सविता बृहस्पतिः शतायुषा हविषेमं पुनर्दुः॥५॥

सद्मनि । "अस्तु श्रीः" ( इति विप्राः ) मनसः काममा-
कूतिं ᳪ वाचः सत्यमशीय । पशूना ᳪ रूपमन्नस्य रसो यशः
श्रीः श्रयतां मयि स्वाहा ॥ ६ ॥ प्रजापतिर्लोकपालो धाता
ब्रह्मा च देवराट् । भगवान् शाश्वतो नित्यं स नो रक्षतु
सर्वतः । भगवान्प्रजापतिः प्रीयाताम् (इति पात्रे जलं क्षि-

---

साम० । हाउ हाउ हाउ । यशो हाउ ३ । वर्चो हाउ । ३ । आस्मिन् हायि २ आस्मिन् हा ३. १. उ । वा २ । तवेदिन्द्रावमं वसु । त्वं पुष्यसि मध्यमम् । सत्रा विश्वस्य परमस्य राजसि । न किष्ट्वा गोषु वृण्वते । हाउ हाउ हाउ । यशो हाउ ३ । वर्चो हाउ ३ । आस्मिन्हायि । २ । आस्मिन्हा ३. १. उ । वा. २ । आयुर्विश्वायुर्विश्वं विश्वमायुरशीमहि प्रजां त्वष्टरधिनिधेह्यस्मे शतं जीवेम शरदो वयन्ते २-३-४-५॥५॥

अथर्व० । आयुरस्मै धेहि जातवेदः प्रजां त्वष्टरधि नि धेह्यस्मै । राय-स्पोषं सवितरा सुवास्मै शतं जीवाति शरदस्तवायम् ॥५॥

ऋक्० । श्रिये जातः श्रिय आ निरियाय श्रियं वयो जरितृभ्यो दधाति । श्रियं वसाना अमृतत्वमायन् भवन्ति सत्या समिथा मितद्रौ ॥ ६ ॥

साम० । आयन्त इवसू ४ रायां विश्वा २ । ईदिन्द्रा २ स्य भा २ क्षता वासूनिजातो जनिमानियोजासा २। प्रतिभागं नदी २ धिमः। प्रा २ ३ ती । भागां ना ३ दा हुँ १ धीमा ३: । ओ २-३-४ वाश्रिये १ ॥ ६ ॥

---

१ अहं मनसः काममभिलाषम् आकूतिं प्रयत्नं चाशयि प्राप्नुयाम् वाचः सत्यं चाशीय मद्वाक् सत्यं वदतु । मयि एतत्सर्वं श्रयतां तिष्ठतु । पशूनां रूपं पशु संबन्धिनी शोभा, अन्नस्य रसः स्वादुत्वं, यशः कीर्त्तिः, श्रीर्लक्ष्मीश्च । ३९।४

पेत्) प्रजापते न त्वदेतान्यन्यो विश्वा रूपाणि परि ता बभूव। यत्कामास्ते जुहुमस्तन्नो ऽअस्तु वय स्याम पतयो रयीणाम्॥ ७॥ आयुष्मते स्वस्तिमते यजमानाय दाशुषे। श्रिये रत्नाशिषः सन्तु ऋत्विग्भिर्वेदपारगैः। (देवेन्द्रस्य यथा स्वस्ति यथा स्वस्ति गुरोर्गृहे। एकलिङ्गे यथा स्वस्ति तथा स्वस्ति सदा मम। "आयुष्मते स्वस्ति" (इति विप्राः)

---

अथ०। एह यातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु। अस्य श्रियमुपसंयातु सर्व उग्रस्य चेतुः समनसः सजाताः॥६॥

ऋक्०प्रजापतेन० विश्वा जातानि परि ता बभूव॥ यत्का०वयंस्याम पतयो रयीणाम्॥

सामा० हाउ। ३। इमाः। ३। प्रजाः। ३। प्रजापते होई। २। प्रजापते। हा ३-१ उ। वा। २। प। हृदयम्। २। प। हृदया। ३१ उ। वा २। प्रजारूप मजीजने ३। इट्टइडा २३४५॥ ७॥

अथ०। प्रजापतेरावृतो ब्रह्मणा वर्मणाहं कश्यपस्य ज्योतिषा-वर्चसा च॥ जरदष्टिः कृतवीर्यो विहायाः सहस्रायुः सुकृतश्चरेयम्॥७॥

---

हे प्रजापते त्वत् त्वत्तोन्यः ता तानि एतानि विश्वा सर्वाणि रूपाणि न परि-बभूव परिभवितुं समर्थो नाभूत्। अतो वय यत्कामाः यः कामो येषां ते यत्कामाः येन कामेन ते त्वां जुहुमः तत्कामरूपं फलं नो ऽस्माकमस्तु। वयं रयीणां धनानां पतयः स्याम। २३।६४। अयं त्रयोविंशत्यध्यायान्तो मन्त्रो यजू-रहित एव। दशमाध्यायस्थस्तु अयममुष्य पितेत्यादियजुर्मध्यः। अत्र कतरः पठनीय इति चेद्यजुर्मध्य एवेति गृहाण।

प्रति पन्थामपद्महि स्वस्तिगामनेहसम् । येन विश्वाः परि द्विषो वृणक्ति विन्दते वसु ॥ ८ ॥ कृतैतत् दानखण्डोक्त पुण्याहवाचनकर्मणः साङ्गतासिद्ध्यर्थं तत्सम्पूर्णफल-प्राप्त्यर्थं च पुण्याहवाचकेभ्यो ब्राह्मणेभ्यो विभज्य मन-सोद्दिष्टां दक्षिणां दातुमहमुत्सृज्ये । (इदं दक्षिणादान मभिषेकान्ते युक्तं अभिषेकस्य पुण्याहवाचनान्तर्भूत-त्वात्) ततः कर्त्ता अस्मिन्पुण्याहवाचने न्यूनातिरिक्तो यो विधिः स उपविष्टब्राह्मणानां वचनात् श्रीमहागणपति प्रसादाच्च परिपूर्णो ऽस्तु । इति वदेत् समाचारात् । अस्तु परि-

---

ऋक्० । स्वस्तये वाजिभिश्च प्रणेतः संयन्महीरिष आसत्सि पूर्वीः ॥ रायोवन्तारो बृहतः स्यामास्मे ऽअस्तु भगइन्द्र प्रजावान् ॥८॥

साम०ईयइया२हायित्यमूषु वाजिना३न्दे३वजूतमूई२ यईया । हा ३४ यि सहोवानन्ता । रूता२ । राँरथानां । इयइया २हाई । अरिष्टा२ । नाथिमि३स्पृत । नाजमाशुम् । ई४यइया । हा२३४५ यि । स्वस्त । यायि । तार्क्ष्यमिहा२ ४२ । हू३वा ५ यिमा ५६५ ॥ ८ ॥

अथर्व । त्यमूषु वाजिनं देवजूतं सहोवानन्त ऋतारं रथानाम्०

अरिष्टनेमिं पृतनाजमासुं स्वस्तये तार्क्ष्यमिहाहुवेम ॥८॥

दक्षिणामिति । परशुरामः । इत्युक्त्वा स्वासने ऽध्वर्युराहा-स्य वाचनस्य च । पूर्णार्थं दक्षिणा स्वाहा विप्रेभ्यः प्रतिपद्यताम् । यष्टुं स्तिलकमारोप्य वर्द्धापनमथाशिषः । दद्यादिति शेषः । हेमाद्रौ च । पुण्याहान्ते ऽर्चयेद्विद्वान्दक्षिणाभिः स्वशक्तित इति ।

---

पन्थां पन्थानं वयं प्रत्यपद्महि प्राप्ताः । कीदृशं स्वस्तिगां स्वस्ति क्षेमेण गम्यते यत्र सः तं, अनेहसं एह इत्यपराधनाम यत्र गतानामपराधो नास्ति । येन पथा गच्छन् पुरुषो विश्वाः विश्वान् सर्वान् द्विषश्चोरादीन्परि वृणक्ति परितो वर्जयति वसु धनं च विन्दते लभते । ४–२९

पूर्ण इति द्विजाः। ततो विप्राः कर्तुर्वामतः पत्नी (तत्सहचरितपुत्रादिकमपि) मुपवेश्य पातितेन जलेन पल्लवदूर्वाभिरुदङ्मुखास्तिष्ठन्त उपविष्टा वा सपत्नीकं कर्त्तारमभिषिञ्चेयुः। तत्र मन्त्राः। पयः[1] पृथिव्याम्पयऽ ओषधीषु पयो दिव्यन्तरिक्षे पयो धाः। पयस्वतीः प्रदिशः सन्तु मह्यम् १ पञ्च नद्यः स० २। वरुणस्योत्तम्भ ३। पुनन्तु मा देव० ४।

---

वामत इति। धर्मप्रवृत्तौ। आशीर्वादे ऽभिषेके च पादप्रक्षालने तथा। शयने भोजने चैव पत्नी तूत्तरतो भवेत्॥ संस्कारगणपत्तौ। वामे सिन्दूरदाने च वामे चैव द्विरागमे। वामे ऽशनैकशय्यायां भवेज्जाया प्रियार्थिनी इति सुमङ्गलीरियं वधूरितिसूत्रव्याख्याने। सर्वेषु धर्मकार्येषु पत्नी दक्षिणतः शुभा। अभिषेके विप्रपादक्षालने चैव वामत इति। विप्रपादक्षालनं च पित्र्ये कर्मणीति बोध्यम्। वामे पत्नी त्रिषु स्थाने पितॄणां पादशौचने। रथारोहणकाले च ऋतुकाले सदा भवेदिति च तत्रैवोक्तेः।

पुत्रादिकमपीति। ततो वाचयिता कुम्भजलं संस्कार्यमूर्द्धनि॥ किञ्चित्सिञ्चेत्तथैवान्ये ब्रूयुश्च विविधाशिष इति बह्वृचकारिकायाम्।

श्लो०। सुरास्त्वामभि षिञ्चन्तु ब्रह्मविष्णुमहेश्वराः। वासुदेवो जगन्नाथस्तथा सङ्कर्षणो विभुः १ प्रद्युम्नश्चानिरुद्धश्च भवन्तु विजयाय ते। आखण्डलो ऽग्निर्भगवान्यमो वै निर्ऋतिस्तथा २ वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः।

---

१ हे पयः त्वमेव ओषधीषु दिवि अन्तरिक्षे च स्थितान् जीवान्धाः दधासि धारयासि अतस्तवानुग्रहात् मह्य प्रदिशः सर्वा दिशः पयस्वतीः पयस्वत्यः सन्तु सर्वत्र मम दुग्धरसप्राप्तिर्भवत्विति प्रार्थना वाक्यार्थः। १८।३६।

देवस्य[1] त्वा सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् । सरस्वत्यै व्वाचो यन्तुर्यन्त्रिये दधामि बृहस्पतेष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ १ देवस्य[2] त्वा स० भ्याम् सरस्वत्यै व्वाचो यन्तुर्यन्त्रेणाग्नेः साम्राज्येनाभिषिञ्चामि २ देवस्य[3] त्वा० अश्विनोर्भैषज्येन तेजसे ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन व्वीर्यायान्नाद्यायाभिषिञ्चामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसे ऽभिषिञ्चामि

ब्रह्मणा सहिताः सर्वे दिक्पालाः पान्तु त्वां सदा ३ कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शान्तिस्तुष्टिः कान्तिस्तु मातरः ४ एतास्त्वामभि षिञ्चन्तु देवपत्न्यः समागताः । आदित्यचन्द्रमाभौमबुधजीवसितार्कजाः ५ ग्रहास्त्वामभिषिञ्चन्तु राहुः केतुश्च तर्पिताः । देवदानवगन्धर्वा यक्षराक्षसपन्नगाः ६ ऋषयो मनवो गावो देवमातर एव च । देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसां

१ हे जल सवितुर्देवस्य प्रसवे आज्ञायां वर्त्तमानो ऽहं अश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां च त्वा त्वां सरस्वत्यै सरस्वत्यास्तत्सबन्धिन्या वाचो यन्तुर्यन्त्र्या ( पुस्त्वमार्षम् ) नियमनकर्त्र्याः यन्त्रिये नियमने ऐश्वर्ये दधामि स्थापयामि । किञ्च बृहस्पतेः साम्राज्येन चक्रवर्त्तित्वेन त्वा त्वामभिषिञ्चामि असाविति यजमाननामग्रहणम् । ९ । २९ ।

२ देवस्य त्वा व्याख्यातम् । सरस्वतीसंबन्धिन्या वाचो यन्तुर्नियन्तुः प्रजापतेर्यन्त्रेण नियमनेन अग्नेश्च साम्राज्येन त्वामभिषिञ्चामि । १८ । ३७ ।

३ हे यजमान त्वामश्विनोर्भैषज्येन वैद्यकर्मणा तेजसे कान्त्यै ब्रह्मवर्चसाय अभिषिञ्चामि सरस्वत्यै सरस्वत्या भैषज्येन ( च ) वीर्याय सामर्थ्याय अन्नाद्यायान्नभक्षणाय त्वामभिषिञ्चामि । इन्द्रस्येन्द्रियेण इन्द्रियपाटवेन सामर्थ्येन च त्वां बलाय, श्रियै, यशसे, च अभिषिञ्चामि । १९ । ४ ।

अथ साङ्कल्पिकाभ्युदयिकश्राद्धम्। तत्रादौ मातृ-

---

साङ्कल्पिकेति। संवर्त्तः। समग्रं यस्तु शक्नोति कर्त्तुं नैवेह पार्वणम्। अपि सङ्कल्पविधिना तस्मिन्काले विधीयते। तत्रापि साग्नेः पिण्डदानं नित्यम्। यो ऽग्नौ तु विद्यमाने ऽपि पिण्डदानं न निर्वपेत्। पतन्ति पितरस्तस्य नरके स तु पच्यते इति वशिष्ठोक्तेः। तत्रैतावान्विशेषः। साङ्कल्पं तु यदा कुर्यान्न कुर्यात्पात्रपूरणम्। आवाहनाग्नौकरणे पिण्डांश्चैव न पातयेत्। तेन साङ्कल्पे पाद्यासने दत्वा गन्धपुष्पाद्युपचारान्कल्पयित्वा भोजनपर्याप्तमन्नं तन्निष्क्रयं वा सङ्कल्प्य दद्यादित्यायाति।

आभ्युदयिकेति। अत्र निमित्तानि शौनककारिकायाम्। कार्यमभ्युदयं श्राद्धं श्रौते स्मार्त्ते च कर्मणि। यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः। पुत्रोत्पत्तौ वृषोत्सर्गे आश्रमस्वीकृतौ तथा। गर्भाधानादिसंस्कारे जातकर्मादिकेषु च। वापीकूपतडागादेरुत्सर्गे शान्तिपौष्टिके। राज्याभिषेके उत्सवादौ महादाने वास्तुकर्मणि। उपाकर्मोत्सर्जनयोः श्रवणागृह्यकर्मसु। वेदव्रतेषु सर्वेषु नवान्नस्य च भोजने। ऊढायाः प्रथमर्त्तौ च अन्नप्राशनके तथा। उद्यापने ऽग्न्याधेयप्रभृतिश्रौतकर्मस्विति। व्रतोद्यापने दुष्टग्रहनक्षत्रादिपीडानिवृत्त्यर्थशान्त्यादौ च न कार्यं शाकलकारिकासु निषेधस्योक्तत्वादिति केचित्। बहुस्मृतिप्रामाणिकग्रन्थविरुद्धत्वान्नादर्त्तव्यमेतदित्यन्ये। इदं चावश्यकम्। वृद्धौ न तर्पिता ये वै पितरो गृहमेधिनः। तद्धीनमफलं ज्ञेयमासुरो विधिरेव स इति शातातपोक्तेः।

तत्रादाविति। अकृत्वा मातृयागं तु पितॄणां यः प्रयच्छति। तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातर इति वचनान्मातृपूजनस्य वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेतेतिवच्छ्राद्धाङ्गत्वं न शङ्क्यम्। "कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः। पूजनीयाः प्रयत्नेन

पूजा। पीठे (कोष्ठषोडशके) कृताग्न्युत्तारणप्राणप्रतिष्ठासु संस्थापितासु प्रतिमासु, अभावे पटादौ लिखितासु, अक्षत-

पूजिताः पूजयन्ति ताः" इति कात्यायनेन साक्षात्कर्माङ्गत्वेनावगताया एव मातृपूजाया दर्शपूर्णमासाभ्यामिष्ट्वाऽन्येन यजेतेतिवच्छ्राद्धपूर्वकालतामात्रबोधनेनाङ्गाङ्गित्वे मानाभावात् । अत एव श्राद्धसङ्कल्पात्पृथगेवास्याः सङ्कल्प आचारप्रमाणकः । अत एव श्राद्धरहितेष्वपि वर्धापनादिकर्मसु एतासां पूजनं दृश्यते । अत एव गणशः क्रियमाणानामित्यत्र मातृपूजनस्य श्राद्धस्य च सकृत्करणत्वं पृथगुक्तम् । यत्र यत्र भवेच्छ्राद्धं तत्र तत्र च मातर इति पुराणवचनेनाङ्गत्ववादिमते तु न पृथक् सङ्कल्प इति ।

मातृपूजेति । परशुरामः । कृत्वाऽऽभ्युदयिकं श्राद्धं मातृपूजनपूर्वकम् । वसोर्द्धारान्वितं सर्वं प्राग्दिने वाऽथ तद्दिने । सगणाधिपा इति । गौरी पद्मा शची मेधा सावित्री विजया जया । देवसेना स्वधा स्वाहा मातरो लोकमातरः । हृष्टिः पुष्टिस्तथा तुष्टिरात्मनः कुल-

द

पू

| | | | |
|---|---|---|---|
| स्वा | सा | वि | तु० |
| मा | प० | गौ | श |
| लो | आ | ग | मे |
| स्वा | ज | दे | हृ पु |

प

उ

नागरकृतविष्णुयागपद्धतौ विशेषः । पञ्चोर्ध्वाः पञ्च तिर्यक् च रेखाः कार्याः प्रयत्नतः । कोष्ठषोडशके स्थाप्या मातरश्च पृथग्विधाः १ कुलदेवी गणेशश्च गौरी पद्मा तथैव च । एता वै मध्यकोष्ठेषु शेषा वै बाह्यमण्डले २ वायव्यतिर्यक्कोष्ठेषु गणेशं च समर्चयेत् । तद्दक्षिणेऽर्च्या गौरी च पद्मा तत्पूर्वतः स्मृता ३ शची च पश्चिमे स्थाप्या देवसेना द्वितीयके । सावित्री दक्षिणे पूज्या विजया च द्वितीयके ४ जया चैवोत्तरे स्थाप्या देवसेना द्वितीयके । स्वाहाऽऽग्नेय्यां तथा पूज्या स्वधा चैवेशकोष्ठके ५ पूर्वे तु मातरो लोकमातरश्च द्वितीयके । हृष्टिः पुष्टिस्तु वायव्ये नैर्ऋत्यां तुष्टिरेव च ६ शेषकोष्ठे ततः स्थाप्या आत्मनः कुलदेवता ७ । अत्र मूलं मृग्यम् ।

पुञ्जेषु वा प्राक्संस्था उदक्संस्था वा सगणाधिपा गौर्यादि देवता आवाहयेत् । ॐ भूर्भुवः स्वः गणपतये नमः गणपतिमावाहयामि स्थापयामि ।

---

देवता । गणेशेनाधिका ह्येता वृद्धौ पूज्यास्तु षोडशेत्यत्रान्ते श्रुतमपि गणपतिपूजनमादौ कार्यम् । आदौ विनायकः पूज्यस्त्वन्ते च कुलदेवता इति छन्दोगपरिशिष्टोक्तेः । अत्र चतुर्दशेति क्वचित्कः पाठः । अस्मिन्पक्षे मातरो लोकमातर इति सर्वासां विशेषणम् । अत्र चतुर्दशत्वषोडशत्वपक्षौ शाखाभेदेन व्यवस्थिताविस्यन्यत्र विस्तरः ।

भूर्भुवः स्वरिति । ग्रहमखादन्यत्र व्याहृतिभिरावाहने मूलमन्वेषणीयम् । गणपतये नम इति । प्रणवादि नमोऽन्तं च चतुर्थ्यन्तं च सत्तम । देवतायाः स्वकं नाम मूलमन्त्रः प्रकीर्त्तित इति तन्त्रवचनात् ॐ गणपतये नमः इत्येव मूलमन्त्रः । केचित्तु गणानान्त्वेत्यादिभिस्तत्तल्लिङ्गकैर्वैदिकमन्त्रैः स्थापयन्ति तन्निर्मूलत्वादुपेक्ष्यमिति प्रयोगदीपे ।

गणपतिमावाहयामीति । एवमावाहनादिपुष्पाञ्जल्यन्तं गणेशपूजनं समाप्य गौरीपूजां कुर्यादेवमन्यासामपि अयं काण्डानुसमयः । अथवा गणपतेरावाहनं कृत्वा गौर्यादीनामावाहनं गणपतेरासनं दत्वा गौर्यादीनामासनं अयं पदार्थानुसमयः । अत्र पदार्थानुसमयं एवेति रुद्रपद्धतौ नारायणभट्टाः ।

संस्कारभास्करे इदं पक्षद्वयमपि प्रामाणिकतयोपन्यस्तमतो यथारुच्यनुष्ठेयम् । द्वितीयपक्षेऽपि धूपदीपनैवेद्यनीराजनादीनि पृथक् पृथक् तन्त्रेण वा भवन्ति ।

तदेतन्मातृकापूजनं वृद्धिश्राद्धं चैकस्यानेकसंस्कारेष्वेककर्त्तृकेषु युगपदुपस्थितेषु सर्वादौ सकृदेव कार्यम् । गणशः क्रियमाणानां मातॄणां

---

गणानान्त्वा० श्लो०—समीपे मातृवर्गस्य सर्वविघ्नहरं सदा ।
त्रैलोक्यवरदं देवं गणेशं स्थापयाम्यहम् ॥१॥

ॐ भू० गौर्यै न० गौरीमावा० २ ॐ भू० पद्मायै न० पद्मामा० ३ ॐ भू० शच्यै न० शचीमा० ४ ॐ भू० मेधायै न० मेधामा० ५ ॐ भू० सावित्र्यै न०

---

पूजनं सकृत्। सकृदेव भवेच्छ्राद्धमादौ न पृथगादिष्विति ब्राह्मात्। एतच्चाग्न्याधानचातुर्मास्यसोमादीनां श्रौतकर्मणामुपाकर्मोत्सर्जनयोः श्रवणाकर्मादीनां च प्रथमे प्रयोगे एव भवति। असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः। प्रतिप्रयोगं नैव स्युर्मातरः सगणाधिपा इति तत्रैवोक्तेः। केचित्तु आधाने सोमयोश्चैव वैश्वदेवे तथैव च। बलिकर्मणि दर्शे च पौर्णमासे तथैव च। नवयज्ञे च यज्ञज्ञा वदन्त्येवं मनीषिणः। एकमेव भवेच्छ्राद्धमेतेषु न पृथक् पृथक् इति तत्रैवोक्तेरेतेषु प्रतिप्रयोगं नावर्त्तते किन्त्वादौ। एतद्भिन्ने सोमयागादौ तु प्रतिप्रयोगमावर्त्तते एव श्राद्धमित्यर्थ इत्याहुः।

गौर्यै नम इति। एतासां गौरीत्वादिना प्रत्येकं देवतात्वं मातृत्वेनैकं वा तत्र प्रत्येकं देवतात्वपक्षे काण्डानुसमयेन पदार्थानुसमयेन वा प्रत्येकं पूजा। मातृत्वेन देवतात्वे त्वेकैव पूजेति न तांबूलादिभेदः। वस्तुतस्तु प्रत्येकं देवतात्वे ऽपि तन्त्रेणैव ताम्बूलादिदाने ऽपि न क्षतिः।

---

आयङ्गौः; श्लो०—हेमाद्रितनयां देवीं वरदां भैरवप्रियाम्।
लंबोदरस्य जननीं गौरीमावाहयाम्यहम् ॥ २ ॥

हिरण्यरूपा० श्लो०—पद्मिनीं पद्मवदनां पद्मनाभोपरि स्थिताम्।
जगत्प्रियां पद्मवासां पद्मामावाहयाम्यहम् ॥ ३ ॥

कदा चन० श्लो०—दिव्यरूपां विशालाक्षीं शुचिकुण्डलधारिणीम्।
रत्नमुक्ताद्यलङ्कारां शचीमावाहयाम्यहम् ॥ ४ ॥

मेधाम्मे वरु० श्लो०—विश्वस्मिन्भूरिवरदां जरां निर्जरसेविताम्।
बुद्धिप्रबोधिनीं सौम्यां मेधामावाहयाम्यहम् ॥ ५ ॥

सावित्रीमा० ६ ॐ भू० विजयायै न० विजयामा० ७ ॐ भू०जयायै न० जयामा० ८ ॐ भू० देवसेनायै न० देवसेनामा० ९ ओं भू० स्वधायै न० स्वधामा० १० ॐ भू० स्वाहायै न० स्वाहामा० ११ ॐ भू० मातृभ्यो न० मातृरा० १२ ॐ भू० लोकमातृभ्यो न० लोक-मातृरा० १३ ॐ भू० हृष्ट्यै न० हृष्टिमा० १४ ॐ भू०

---

उप० तोसि सावित्रोसि श्लो०—जगत्सृष्टिकरीं धात्रीं देवीं प्रणवमातृकाम्।
वेदगर्भां यज्ञमयीं सावित्रीं स्थापयाम्यहम् ॥६॥

विज्यंधनुः श्लो०—सर्वास्त्रधारिणीं देवीं सर्वाभरणभूषिताम्।
सर्वदेवनुतां ध्यातां विजयां स्थापयाम्यहम् ॥ ७ ॥

या ते रुद्र० श्लो०—सुरारिमथिनीं देवीं देवानामभयप्रदाम्।
त्रैलोक्यवन्दितां देवीं जयामावाहयाम्यहम् ॥ ८ ॥

देवानां भद्रा० श्लो०—मयूरवाहनां देवीं खड्गशक्तिधनुर्धराम्।
आवाहये देवसेनां तारकासुरमर्दिनीम् ॥ ९ ॥

पितृभ्यः स्वधायि० श्लो०—कव्यमादाय सतत पितृभ्यो या प्रयच्छति।
पितृलोकार्चितां देवीं स्वधामावाहयाम्यम् ॥१०॥

१ स्वाहा यज्ञम्० श्लो०—हविर्गृहीत्वा सततं देवेभ्यो या प्रयच्छति।
तां दिव्यरूपां वरदां स्वाहामावाहयाम्यहम् ॥ ११ ॥

२ आपो अस्मान्० श्लो०— आवाहयाम्यहं मातृः सकला लोकपूजिताः।
सर्वकल्याणरूपिण्यो वरदा दिव्यभूषिताः ॥१२॥

३ उर्वा कृणोतु० श्लो०—आवाहये लोकमातृर्जयन्तीप्रमुखाः शुभाः।
नानाभीष्टप्रदाः शान्ताः सर्वलोकहितावहाः ॥१३॥

धृष्टिरसि० श्लो०—सर्वहर्षकरीं देवीं भक्तानामभयप्रदाम्।
हर्षोत्फुल्लास्यकमलां हृष्टिमावाहयाम्यहम् ॥ १४ ॥

पुष्ट्यै न० पुष्टिमा० १५ ॐ भू० तुष्ट्यै न० तुष्टिमा० १६ ॐ भू० (अमुकनाम्न्यै आत्मनः) कुलदेवतायै न० (अमुकनाम्नीं आत्मनः ) कुलदेवतामा० १७ गणेशः सुप्रतिष्ठितो वरदो भवतु, गौरी सुप्रतिष्ठिता वरदा भवतु, इत्यादि मन्त्रावृत्या पृथक् पृथक्, गणेशपूर्वकगौर्यादिषोडशमातृभ्यो नमः इति समुदितरूपेण वा, सर्वास्तन्त्रेण वा प्रतिष्ठाप्य षोडशभिरुपचारैः काण्डानुसमयेन पदार्थानुसमयेन वा प्रत्येकं सह वा सर्वाः पूजयेत् । ( पदार्थानुसमयपक्षे ऽपि उपचाराः सर्वाभ्यः पृथक् पृथगेव देयाः तन्त्रेणेति सम्प्रदायः ) पूजनं समाप्य । आयुरारोग्यमैश्वर्यं ददध्वं मातरो मम । निर्विघ्नं सर्वकार्येषु कुरुध्वं सगणाधिपाः' इति नारिकेलफलं समर्प्य ( कृताञ्जलिः ) गणेशपूर्वकगौर्यादिषोडशमातृणां पूजनविधौ यन्न्यूनमतिरिक्तं वा

---

गौर्यादिषोडशमातृभ्यो नम इति । अत्र सगणाधिपानां मातॄणां षोडशसङ्ख्यावत्वेन संज्ञात्वात् सप्तर्षिभ्यो नम इति वत् दिक्सङ्ख्ये संज्ञायामिति समासः एवं सप्तघृतमातृभ्यो नमः नवग्रहेभ्यो नमः इत्यादीनामपि साधुत्वं बोध्यम् ।

---

त्वष्टा तुरीपः० श्लो०—पोषयन्तीं जगत्सर्वं शिवां सर्वार्थसाधिकाम् ।
बहुपुष्टिकरीं देवीं पुष्टिमावाहयाम्यहम् ॥१५॥

अर्यमणं बृ० श्लो०—आवाहयामि संतुष्टिं सूक्ष्मवस्त्रान्वितां शुभाम् ।
सन्तोषभावयित्रीं च रक्षन्तीमध्वर शुभम् ॥१६॥

प्राणाय स्वाहा० श्लो० – आत्मनो देवतां देवीमैश्वर्यसुखदायिनीम् ।
वंशवृद्धिकरीं नित्यामाह्वये च कुलाम्बिकाम् ॥१७॥

तत्सर्वं मातृणां प्रसादात्परिपूर्णमस्तु । अनया पूजया सगणेशगौर्यादिषोडशमातरः प्रीयन्ताम् ।

अथ वसोर्द्धाराप्रयोगः । मातृपूजासन्निहिते

---

प्रीयन्तामिति। अत्र संस्कारभास्करे मातृपूजानन्तरमन्यासामपि मातृणां पूजनं दृश्यते। तत्रादौ जलमातरः। मत्सी कूर्मी च वाराही माण्डूकी मकरी तथा। ग्राहकी क्रौञ्चकी चैव स्मृता जलमातरः।। कांस्ये वा ताम्रपात्रे वा प्रभूतजलपूरणम्। तत्र मत्स्याद्या आवाह्य पूजयेज्जलमातृका इति। ततः स्थलमातरः। ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा। वाराही च तथेन्द्राणी चामुण्डा स्थलमातरः। अथ द्वारमातरः। जयन्ती मङ्गला चैव पिङ्गला दक्षिणे गृहात्। आनन्दवर्धिनी वामे महाकाली च निर्गमे। गृहस्य दक्षिणे भागे तिस्रो लेख्यास्तु मातरः। वामभागे तथा द्वे च जयन्त्यादिक्रमेण तु। अथ गृहमातरः। कीर्त्तिलक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः। बुद्धिर्लज्ज वपुः शान्तिस्तुष्टिः कान्तिस्तु मातरः इति।

वसोर्द्धाराप्रयोग इति। वसोश्चेदिराजस्याग्नेर्वा तदुद्देशप्रवृत्तत्वेन तत्संबन्धिनीं, वसोश्च सर्वोत्सवप्रवर्त्तकत्वेन मङ्गलहेतुत्वाद्विवाहादिकर्मसु पूजा युक्तेति रुद्रकल्पद्रुमे। यद्वा वसोर्मन्त्रेण धारा वसुधारेति प्राप्ते वसोर्द्धारेति प्रयोगो घृतमातृषु योगरूढः। अत एव वसोर्द्धारेति समाख्यानं वक्ष्यमाणवचनेषु सङ्गच्छते। समाख्या यौगिकः शब्दः। वसोर्द्धारां जुहोतीत्यादौ तु कर्मनामधेयम्।

मातृपूजासन्निहिते इति। रुद्रयामले। तत्पुरः सन्निधाने वा कुड्ये रेखा घृतेन च। धारालिङ्गेन मन्त्रेण पञ्च वा सप्त वा लिखेत्। अत्र तत्पुर इत्याद्युक्तेः पाठक्रमाच्च मातृपूजां समाप्यैव वसोर्द्धाराः कार्या इत्युक्तं भवति। प्रयोगदीपे तु वसोर्द्धारास्थलमप्युक्तं तद्यथा। गृहनिर्गमवामे च वसोर्द्धारावितर्दिका। कार्या विवाहे विद्वद्भिर्गृहे वै

कुड्ये यथाचारं कुङ्कुमेन ( एकं द्वौ त्रीन् चतुरः पञ्च षट् सप्त ) बिन्दून् ( अधोऽधः क्रमेण ) कृत्वा ( तप्त ) घृतेन दुग्धेन वा सप्तसु बिन्दुषु सप्तधाराः पञ्चधारा वा यथासंभवं प्राक्संस्था उदक्संस्था वा प्रादेशमात्रीः कुर्यात् । तत्र मन्त्रः । ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्वा । ततः ॐ "कामधुक्षः" इत्येतावतैव

---

पूर्वदक्षिणे । गृहे वै पश्चिमे द्वारे तथा उत्तर एव च । वसोर्द्धारावेदिका च गृहनिर्गमदक्षिणे इति ।

कुड्य इति । अत्र पीठे एतासां पूजने मूलमन्वेष्यम् । यथाचारमिति । अत्र धाराकरणमात्रं वाचनिकमितरन्मन्त्रादिकं सर्वमाचारप्राप्तमिति बोध्यम् ।

दुग्धेन वेति । परशुरामः । नातिनीचोच्छ्रिते कुड्ये वसोर्द्धारास्तु सर्पिषा । पञ्च वा सप्त वा धारा वसोर्मन्त्रेण कारयेत् । दुग्धेन वा वसोर्द्धाराः कार्यास्तासां च देवताः । श्रीश्च लक्ष्मीर्धृतिर्मेधा स्वाहा प्रज्ञा सरस्वती । माङ्गल्येषु प्रपूज्यन्ते सप्तैता घृतमातरः । सप्तधारा इति । छन्दोगपरिशिष्टे । कुड्यलग्ना वसोर्द्धाराः सप्त धारा घृतेन तु । कारयेत्पञ्च धारा वा नातिनीचा नचोच्छ्रिताः । एतच्च-

---

हे घृत वसोरन्नस्य पवित्रं शोधकं त्वमसि । किंभूतं घृतं शतधारं शतसंख्या धारा यस्मिन् । एवं सहस्रधारम् । सविता देवः शतधारेण वसोः पवित्रेण सुष्ठु पुनातीति सुपु तेन सुप्वा घृतेन त्वा त्वां पुनातु शोधयतु । कामधुक्ष इति देवविशेषणम् । कामन्दोग्धीति कामधुक्षः इत्थं घृतं भावयित्वा तेन मातृकासु धारा दद्यात् । श्लो० नमोऽस्तु वसुमातृभ्यो घृतमातृभ्य एव च । स्वयज्ञकार्यसिद्ध्यर्थं धारा दास्यामि मातरः ।

मन्त्रेण ता धारा ( बिन्दून् ) ऊर्ध्वभागे मिथः श्लिष्टाः कुर्यात् । ततः ओं भू० श्रियै न० श्रियमा० १ ओं भू० लक्ष्म्यै न० लक्ष्मीमा २ ओं भू० धृत्यै न० धृतिमा ३ ओं भू० मेधायै न० मेधामा ४ ओं भू० स्वाहायै न०स्वाहामा० ५ ओं भू० प्रज्ञायै न० प्रज्ञामा ६ ओं भू० सरस्वत्यै न० सरस्वतीमा ७।

---

नमाशादित्येनैवं व्याख्यातं, ता मातरो यत्र पटादिषु भवन्ति तत्र तासामधस्ताद्भित्तिलग्ना वसोर्धारारूया धारा घृतेन पुत्रशिष्यादिना कारयेदिति। अत्र स्वार्थे णिच् , कुर्यादित्यर्थ इत्यनन्तः ।

ऊर्ध्वभागे इति । एकीकृत्योर्ध्वभागे तु कुङ्कमेन गुडादिनेति रुद्रयामलात् । नागवल्लीदलेनैव शुभेन पल्लवेन वा । धारां तु पातयेत्सम्यगभितो मेलयेत्तत इति च पठन्ति ।

---

श्रियादिसप्तमातृभ्यो घृतमातृभ्य एव च ।
गुडेन मेलयिष्यामि ताः सर्वार्थप्रसाधिकाः ।

मनस का० । श्लो०—सुवर्णपद्महस्तां तां विष्णोर्वक्षःस्थले स्थिताम् ।
त्रैलोक्यवल्लभां देवीं श्रियमावाहयाम्यहम् ॥ १ ॥

इहरतिरि० । श्लो०—शुभलक्षणसम्पन्नां क्षीरसागरसंभृताम् ।
चन्द्रस्य भगिनीं सौम्यां लक्ष्मीमावाहयाम्यहम् ॥ २ ॥

अग्ने व्रज्ञ । श्लो०—सर्वहर्षकरीं देवीं भक्तानामभयप्रदाम् ।
हर्षोत्फुल्लास्यकमलां धृतिमावाहयाम्यहम् ॥ ३ ॥

मेधाम्मे व० । श्लो०—सदसत्कार्यकरणक्षमां बुद्धिविशालिनीम् ।
भव्यकार्ये शुभकरीं मेधामावाहयाम्यहम् ॥ ४ ॥

स्वाहा यज्ञम्मन० । श्लो०—हविर्गृहीत्वा सततं देवेभ्यो या प्रयच्छति ।
तां दिव्यरूपां वरदां स्वाहामावाहयाम्यहम् ॥ ५ ॥

अंबे ऽअं०—प्रणवस्यापि जननीं रसनाग्रस्थितां सदा ।
प्रागल्भ्यदात्रीं चपलां प्रज्ञामावाहयाम्यहम् ॥ ६ ॥

पावका नः—सरस्वतीं सुरैर्वन्द्यां धातृपुत्रीं क्षमाकरीम् ।
विद्वज्जनस्य सत्कर्त्रीं देवीमावाहयाम्यहम् ॥ ७ ॥

(पञ्चधारापक्षे प्रज्ञासरस्वत्योरभावः) वसोर्द्धारादेवताभ्यो न० श्रियादिसप्तघृतमातृभ्यो नमः इति पूजनम् । आचरितवसोर्द्धारापूजनविधौ यन्न्यूनातिरिक्तं तत्सर्वं परिपूर्णमस्तु' इति कृताञ्जलिः प्रार्थयेदिति । अनया पूजयाश्रियादि सप्तघृतमातरः प्रीयन्ताम्[1] । तत आयुष्यसूक्तजपः[2] । करिष्य-

---

आयुष्यसूक्तजप इति । छन्दोगपरिशिष्टे । आयुष्याणि च शान्त्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः पितृभ्यस्तदनु भक्त्या श्राद्धमुपक्रमेत् । आयुषे हितानि आयुष्यं वर्चस्यमित्यादीनि त्रीणि मन्त्रवाक्यानीति नारायणो वृत्तिकृत् । आनो भद्रा इत्यादीनि दशेति हेमाद्रिः । अत्र जप्त्वेति समानकर्तृकतायां क्त्वाप्रत्ययविधानाद्यजमानकर्तृक एवायं

---

१ श्लो०—यदक्षरेण भो देव्यः पूजिता विधिमार्गतः । कुर्वन्तु कार्यमखिलं निर्विघ्नेन क्रतूत्तमम् ।

२ आयुष्यजपः श्लो०—अश्वत्थामादिऋषयो वशिष्ठप्रमुखास्तथा ।
मार्कण्डेयप्रभृतयः सर्वे सन्तु शिवार्चकाः ॥१॥
जमदग्निः कश्यपश्च दीर्घमायुः करोतु मे ।
अन्ये ऋषिगणा देवा इन्द्राद्याश्च सशक्तिकाः ॥२॥
भूसुराः सुतपोनिष्ठाः सत्यव्रतपरायणाः ।
दीर्घमायुः प्रयच्छन्तु सर्वकामस्य सिद्धये ॥३॥
यन्नायुष्यं चिरं देवाः सप्तकल्पान्तजीविनः ।
ददुस्तेनायुषा सम्यक् जीवेम शरदः शतम् ॥४॥
दीर्घा नागास्तथा नद्यः समुद्रा गिरयो दिशः ।
अनन्तेनायुषा तेन जीवेम शरदः शतम् ॥५॥
सत्यानि पञ्च भूतानि विनाशरहितानि च ।
अविनाश्यायुषा तद्वज्जीवेम शरदः शतम् ॥६॥ इति

माणादःकर्मणो ऽमङ्गलनाशार्थमायुष्यजपं करिष्ये। आयुष्यं वर्चस्यꣳ रायस्पोषमौद्भिदम्। इदꣳ हिरण्यं वर्चस्वज्जैत्रायाविशतादु माम्॥१॥ नं तद्रक्षाꣳसि न पिशाचास्तरन्ति देवानामोजः प्रथमजꣳ ह्येतत्। यो बिभर्ति दाक्षायणꣳ हिरण्यꣳ स देवेषु कृणुते दीर्घमायुः स मनुष्येषु कृणुते दीर्घमायुः २ यदा बध्नन्दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्यमानाः। तन्म आ बध्नामि शतशारदायायुष्माञ्जरदष्टिर्यथासम् ३। इति

---

जपो न ऋत्विक्कर्तृक इति बोध्यम्। इतीति। अत्र मातृपूजायाः श्राद्धाङ्गत्वे ऽपि विसर्जनान्ताया एव मातृपूजाया अङ्गत्वोपपत्तेः पूर्वं विसर्जनान्तां मातृपूजां कृत्वा पश्चाच्छ्राद्धमिति केचित्। युक्ततरं तु नान्दीश्राद्धान्ते एव मातृविसर्जनम्। प्रतिष्ठादौ तु प्रतिष्ठान्ते एवेत्युक्तं प्रागिति।

---

१ इद हिरण्यं जैत्राय जयाय मामु मामेवाविशतात् मयि तिष्ठतु। कीदृशम् आयुषे हितं, वर्चसे हितं, रायो धनस्य पोषं वर्धकं, औद्भिदं धनस्य प्रकाशकम्, वर्चस्वदन्नसंयुक्तम्।

२ रक्षांसि पिशाचाश्च तद्धिरण्यं न तरन्ति न हिंसन्ति। हि यस्मात्तद्धिरण्यं देवानां प्रथमं प्रथमोत्पन्नमोजस्तेजः। यो दाक्षायण्कं हिरण्यं बिभर्त्ति स देवलोकेषु मनुष्यलोकेषु च दीर्घमायुः करोति उभयत्र चिरं वसतीत्यर्थः।

३ शोभनं मनः कुर्वते सुमनस्यन्ते त एव सुमनस्यमानाः दक्षस्यापत्यानि दाक्षायणा ब्राह्मणा यद्धिरण्यं शतानीकाय राज्ञे अबध्नन्बबन्धुः तद्धिरण्यं शत शारदाय शतं शरदो जीवनाय मे मयि आ बध्नामि। यथा जरदष्टिर्दीर्घजीवी अहं आसं भूयासम्।

स्मार्तप्रभौ मातृपूजनम् । अथापात्रिकश्राद्धम् । प्रातः पूर्वाह्णे

प्रातरिति । प्रातः शब्दः प्रथमघटिकात्रयवाचीति नारायणवृत्तिकृत् । सार्द्धप्रहरात्मककालवचनः प्रातः शब्द इत्यन्ये[1] ।

पूर्वाह्णे इति । यत्तु पूर्वेद्युर्मातृकाश्राद्धं कर्माहनि तु पैतृकम् । मातामहं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतमिति, पूर्वाह्णे मातृकं श्राद्धं मध्याह्ने पैतृकं तथा । ततो मातामहानां च वृद्धौ श्राद्धत्रयं स्मृतिमिति गार्ग्यशातातपादिवाक्यैराभ्युदयिकं श्राद्धमेकैकमात्रादिश्राद्धस्यैकैकदिनसाध्यत्वाद्दिनत्रयसाध्यमसंभवे पूर्वाह्णादिकालत्रयसाध्यत्वेनैकैकदिनसाध्यमुक्तं तदन्यशाखाविषयम् । वाजसनेयिनां तु एकवचननिर्देशादेकस्मिन्पूर्वाह्णे आभ्युदयिकं कार्यमित्यर्थकात्पूर्वाह्णे इति ६।२ सूत्रादाभ्युदयिकश्राद्धस्यैकपूर्वाह्णकालसाध्यतावगमात् त्रेधा विभक्ते पूर्वाह्णे एव । यदि तु त्रीणि मात्रादिश्राद्धानि सूत्रकृतोक्तानि स्युस्तदा तेषां दिनत्रयसाध्यता पूर्वाह्णादिकालत्रयसाध्यता

---

१ तदाह गार्ग्यः । ललाटसम्मिते भानौ प्रथमः प्रहरः स्मृतः । स एवाध्यर्धसंयुक्त प्रातरित्यभिधीयते इति । अत्रेदं तत्वम् । प्रातर्वृद्धिनिमित्तकमिति वचनाद्गार्ग्योक्तः प्रातः शब्दार्थः श्राद्धकालविषयः । नारायणवृत्तिकृदुक्तः प्रातः शब्दार्थस्त्वामन्त्रणकालविषयः । प्रातरामन्त्रितानिति भूतकालनिर्देशात् इति ।

२ पार्वणं चापराह्णे तु वृद्धिश्राद्धं तथा ऽऽम्रिकमिति गालववचनं न कात्यायनीयश्रौताधानविषयं विहितो ह्यग्न्याधेयोपक्रमो दिवाशनात्पूर्वमाचार्येण । दिवाशनं चाष्टधाविभक्तस्याह्नः पञ्चमभागे दक्षादिभिः स्मर्यते । नहि त्रेधा विभक्ते द्वेधा विभक्ते वा ऽपराह्णे आभ्युदयिकानुष्ठानपूर्वकं क्रियमाणो ऽग्न्याधेयोपक्रमो दिवाशनकालात्पूर्वं संभवति । स्मार्त्ताधाने त्वपराह्णे ऽप्याभ्युदयिकमेतद्वचनादिति । पुत्रजन्मादौ तु भुक्तवता ऽपि पुत्रजन्मानन्तरमेव रात्रावपि कार्यं न तत्र पूर्वाह्णानियमः । यथा ऽऽह लौगाक्षिः । नियतेषु निमित्तेषु प्रातर्वृद्धिनिमित्तकम् । तेषामनियतत्वे तु तदानन्तर्यमिष्यते । १ ।

यज्ञोपवीती प्राङ्मुखो

वा स्यात्। न च सूत्रकृता त्रीणि श्राद्धान्युक्तानि किं तु पितृमातामहपार्वणद्वयात्मकं श्राद्धद्वयमेवोक्तम् । अपि च मात्रादिश्राद्धानां कालभेदात्प्रयोगभेदो भविष्यति । सूत्रकारस्तु द्वयोः श्राद्धयोः प्रयोगैकत्वं दर्शयति "नान्दीमुखाः पितरः पितामहाः प्रपितामहाः मातामहाः प्रमातामहा वृद्धप्रमातामहाश्च प्रीयन्तामिति । एतच्च प्रकृतिप्राप्तसहप्रयोगे एवोपपद्यते । प्रागग्रेष्वथ दर्भेष्विति पृ० ८४ पं० २ वक्ष्यमाणवचनेन च निः सन्दिग्धं सहप्रयोगो दर्शितः। यदपि "अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः। पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्वकम्"इति वृद्धमनुवचनं तदपि शाखान्तरविषयं यत्र हि मात्रादिश्राद्धत्रयविधिरस्ति तत्रैवानुकल्पतया कालैकत्वेन विधिर्युक्तः नहि कात्यायनसूत्रादौ कालत्रये मात्रादिश्राद्धत्रयविधिरस्ति । तस्माद्वाजसनेयिभिरेकस्मिन्पूर्वाह्णे एवैकप्रयोगं पार्वणत्रयात्मकमाभ्युदयिकं श्राद्धमनुष्ठेयमिति। तत्रापि महत्सु पूर्वेद्युस्तदहरल्पेषु इति बह्वृचपरिशिष्टाद् व्यवस्था । अत्र निर्णयसिन्धौ विशेषः । एकविंशत्यहर्यज्ञे विवाहे दश वासराः । त्रिषट्चौलोपनयने नान्दीश्राद्धं विधीयते इति ।

यज्ञोपवीतीति । सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिनेति वचनात् ।

प्राङ्मुख इति । उदङ्मुखः प्राङ्मुखो वा यजमानः समाहितः । वृद्धिश्राद्धं प्रकुर्वीत नान्यवक्त्रः कदाचनेति हेमाद्रौ मार्कण्डेयपुराणात् । अत्रैके प्राङ्मुखस्य कर्त्तुरुदक्संस्थतायां विधानसामर्थ्यात्प्रादक्षिण्यमपास्येदित्याहुः तत्रापि प्रादक्षिण्यमेवेत्युदङ्मुखस्यैव कर्तृत्वमित्यन्ये । अत्र ब्रूमः । प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत् । अपः क्षिपेन्मूलदेशे ऽवनेनिक्ष्वेति निस्तिलाः । द्वितीयं च

**( दैवे उदङ्मुखो वा ) ऽष्टौ कुशवटून्**

तृतीयं च मध्यदेशाग्रदेशयोः। मातामहप्रभृतींस्तु एतेषामेव वामत इति छन्दोगपरिशिष्टे कात्यायनेन पित्रादीनां वामतो मातामहादीनामवनेजनं विदधता प्रादक्षिण्यानुग्रहायावनेजनपिण्डपङ्क्त्योर्दक्षिणसंस्थताविधानात्प्राङ्मुखस्य कर्त्तुरुदक्संस्थतायां विधानसामर्थ्यात्प्रादक्षिण्यमपास्येदित्ययुक्तम्। उदङ्मुखः प्राङ्मुखोवेति प्राङ्मुखत्वोदङ्मुखत्वयोर्विकल्पस्य विहितत्वेनोदङ्मुखस्यैव कर्तृत्वमित्यप्ययुक्तमेवेति।

उददङ्मुखो वेति। कर्त्तुर्दैवब्राह्मणानां चोदङ्मुत्वे ऽसमञ्जसं स्यात्। कौशब्राह्मणपक्षे तु कर्तुः प्राङ्मुखत्वे ऽपि न क्षतिरिति।

अष्टाविति। अत्र त्रीणि पार्वणानि। अस्मिन्पक्षे प्रथमं मातृपार्वणं द्वितीयं पितृपार्वणं तृतीयं मातामहपार्वणम्। मातामहाश्च सपत्नीकाः। पार्वणद्वयपक्षे पितरश्च सपत्नीकाः। प्रतिपार्वणं वैश्वदेवे च युग्मा विप्रास्तेनाष्टौ। यथा ऽऽह छागलेयः। एकैकस्य तु वर्गस्य द्वौ द्वौ विप्रौ समर्चयेत्। वैश्वदेवे तथा द्वौ च न प्रसज्येत विस्तरे इति। युग्माश्चात्र द्विजाः कार्यास्ते पूज्याश्च प्रदक्षिणमिति च मार्कण्डेये। प्रतिपितरं युग्मा इति पक्षे तु अष्टादश। वैश्वदेवे द्वौ चत्वारो वा। तेन विंशतिर्द्वाविंशतिर्वेति।

कुशवटूनिति। देवलः। निधाय वा दर्भवटूनासनेषु समाहितः। प्रैषानुप्रैषसंयुक्तं विधानं प्रतिपादयेत्। मनुष्यप्रतिकृति (कुशसमूहो) वटुः तत्र कुशाग्रभागस्य मुखपरिकल्पनेन दैवे प्राङ्मुखाः पित्र्ये उद

१ नात्र दर्भसङ्ख्यानियमः। यज्ञवास्तुनि मुष्टौ च स्तम्बे दर्भवटौ तथा। दर्भसङ्ख्या न विहिता विष्टरास्तरणेषु चेति कात्यायनोक्तेः। यदि तु "पञ्चशता भवेद्ब्रह्मा तदर्धेन तु विष्टर" इति वचनमस्ति तदा दर्भसङ्ख्यायाः संभवासंभवाभ्यां व्यवस्थितो विकल्प इति **नारायणवृत्तौ**।

( दैवे प्राङ्मुखान् ( प्रागग्रान् ) सोत्तरभागे, पित्र्ये

---

ङ्मुखाः। प्रैषानुप्रैषसंयुक्तं श्राद्धेतिकर्त्तव्यताकाण्डं स्वयमेव कुर्यादित्यर्थः। अस्मिन्पक्षे निमन्त्रणादयो धर्माः सर्वेऽपि कुशे ब्राह्मणशब्दव्यवहारात्कार्याः। यद्यपि कुशद्विजे हस्तपादाद्यवयवा न संभवन्ति तथापि कर्मकाले स्मृत्यर्थमुल्लेखः। अत्र प्रत्यक्षब्राह्मणोपवेशनपक्षस्य प्रचाराभावात्कौश पक्ष एव लिख्यते। भविष्ये। ब्राह्मणानामसम्पत्तौ कृत्वा दर्भमयान्द्विजानिति। प्राङ्मुखान्यासनान्येषां द्विदर्भोपहितानि चेति रुद्रकल्पद्रुमे। एतच्च दर्भवटुनिधानमपात्रके एव न साङ्कल्पिके। तत्रासनादीनां सर्वेषां सङ्कल्पमात्रं न दानं साङ्कल्पिकत्वात्। निष्क्रयदानं तु भवत्येव। वटुनिधानं त्वयौक्तिकमिति मन्तव्यम्।

दैवे प्राङ्मुखानिति। छन्दोगपरिशिष्टे कात्यायनः। प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा। उपवेश्य कुशान्दद्यादृजुनैव हि पाणिनेति। उभयतो दैवे पित्र्ये च। तथा च पार्वणवद्दैवे प्राङ्मुखान्पित्र्ये चोदङ्मुखान्। यद्यपि सर्वानेव तु तान्विप्रान्प्राङ्मुखानुपवेशयेदिति हेमाद्रौ छागलयोक्तेर्दैवे पित्र्ये च ये विप्रास्ते सर्वेऽपि प्राङ्मुखा उपवेशनीया इत्ययमपि पक्षोऽस्ति तथापि छन्दोगपरिशिष्टे कात्यायनेन प्रकृतिप्राप्तस्यापि ब्राह्मणोपवेशनस्य पुनर्विधानात्प्रकृत्यनुग्रहात्प्रादक्षिण्यानुरोधाच्च पूर्वोदाहृतपक्ष एव कात्यायनसम्मत इति वाजसनेमिभिः स एवाश्रयणीयः। परं त्वेतावान्विशेषः। अत्र प्रदक्षिणोपचारताविधानात्तदनुग्रहाय ब्राह्मणपङ्क्तिनिवेशः प्रागुपक्रमः पश्चादपवर्ग एव विधेयः। ये त्वाधुनिकाः कर्मठाः पूर्वस्यामुदग्रान्कुशवटून्दैवे, प्रागग्रांश्च पित्र्ये स्थापयन्ति तत्र मूलं त एव जानन्त्विति।

प्रागग्रानिति। प्राङ्मुखान्यासनान्येषामिति वचनात्। अत्र दर्भवटूनां प्राङ्मुखोदङ्मुखता दर्भाग्रस्य मुखकल्पनया ज्ञेया।

उदङ्मुखान् (उदगग्रान्) स्वदक्षिणे, प्रागुपक्रमान्पश्चादपवर्गान्) संस्थाप्य पातितदक्षिणजानुः प्रदक्षिणधर्मेण[1] यवैर्ऋजुभिर्दर्भैर्दैवतीर्थेन पाद्यं दद्यात् ।

---

पातितदक्षिणजानुरिति । सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत् । निपातो नहि सव्यस्य जानुनो विद्यते क्वचिदिति छन्दोगपरिशिष्टे कात्यायनोक्तेः ।

प्रदक्षिणेति । शातातपः । सव्येन चोपवीतेन ऋजुदर्भैश्च धीमता । पितॄणां रूपमास्थाय देवा अन्नं समश्नुते । तस्मात्सव्येन दातव्यं वृद्धिश्राद्धेषु नित्यशः । यथैवोपचरेद्देवांस्तथा वृद्धौ पितॄनपीति ।

यवैरिति । वृद्धिश्राद्धेषु कर्त्तव्यास्तिलस्थाने यवास्तथेति विष्णुधर्मोत्तरात् ।

ऋजुभिर्दर्भैरिति । न कुशा द्विगुणीकृता इति निषेधात् । ऋजवो दर्भा इति का० श्रा० सूत्रे ६.४ विधानाच्च । अत्र प्रकृतौ दैवे कर्मणि ऋजुदर्भाणामेव विहितत्वादृजवो दर्भाः प्राप्ता एव । पुनः ऋजवो दर्भा इति सूत्रं "कुशस्थाने च दूर्वाः स्युर्मङ्गलस्याभिवृद्धये" इति हेमाद्रौ ब्रह्माण्डपुराणे उपदिष्टदूर्वया सह विकल्पार्थम् । तेन संस्कारककर्माङ्गनान्दीश्राद्धे दर्भस्थाने दूर्वा वा कार्या इति ।

पाद्यमिति । अर्घत्वाविशेषात्पादार्घोऽपि निषिद्ध एवेति कश्चित् । कश्चिदावाहनसाहचर्यात् क्वचिदग्नौकरणसाहचर्याच्च हस्तार्घ एव निषिद्धः पादार्घस्तु भवत्येवेत्यपरे । सम्प्रदायोऽप्येवम् । अत्र पाद्यं पादावनेजनं पादप्रक्षालनमिति शब्दत्रयोपादानमादरार्थमेव ।

---

१ अत्र प्रदक्षिणग्रहणं कर्मकर्तृनिष्ठसकलदैवधर्मोपलक्षणार्थं ततश्च प्राक्संस्थत्वोदक्संस्थत्वोपवीतित्वप्राङ्मुखत्वोदङ्मुखत्वदक्षिणजानुनिपातित्वदेवतीर्थत्वादिदेवधर्मः कृत्स्नोऽत्र भवति ।

सत्यवसुसंज्ञका विश्वे देवा

अभ्यासे भूयांसमर्थं मन्यन्ते इति यास्कोक्तेः । वस्तुतस्तु इदं वः पाद्यमेतावदेव वाक्यं प्रयुक्तं रुद्रकल्पद्रुमादिपद्धतिषु । युक्तं चैतत् । शब्दत्रयोपादानं त्वनर्थकमेवेति ।

सत्यवसुसंज्ञका इति । इष्टिश्राद्धे क्रतुर्दक्षः सत्यौ नान्दीमुखे वसू । पुरूरवार्द्रवौ चैव पार्वणे समुदाहृतौ । नैमित्तिके कामकालौ काम्ये च धूरिलोचनौ" इति शङ्खोक्तेः । आधानाङ्गश्राद्धे ऽपि सत्यवसू एव "कर्माङ्गं वृद्धिवच्च तत्" इति वृद्धिश्राद्धदेवतातिदेशात् । कर्माङ्गश्राद्धमिष्टिश्राद्धमिति हेमाद्रेर्व्याख्यानादिति कौस्तुभे । अन्ये तु इष्टिश्राद्धमिष्टिजन्याहवनीयप्रयोज्यमाधानसोमयागादौ क्रियमाण, मिष्टिनिमित्तकं वा चातुर्मास्याद्यङ्गभूतं न तु कर्माङ्गं तत्रेष्टिश्राद्धशब्दस्य प्रवृत्तिनिमित्तात्वाभावादिति वदन्ति ।

अत्र सत्यवस्वोः समुदितयोरेवाग्नीषोमवद्देवतात्वमिति न ब्राह्मणद्वये प्रत्येकमेकैकस्य प्रयोग इति हेमाद्रौ स्पष्टम् । अतश्च सत्यवसू-विश्वेदेवा इति सामान्यविशेषसंज्ञापदयोः समुच्चयेन प्रयोगः । यद्यपि द्विवचनान्तबहुवचनान्तयोः सामानाधिकरण्यं न संभवति तथापि "शालास्तु भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ"इतिवदिहापि सामानाधिकरण्येनान्वये न किञ्चिद्बाधकम् । इदानीन्तनास्तु बहुवचनं पूजार्थं मत्वा सत्यवसुसंज्ञका विश्वेदेवा इति वाक्यं प्रयुञ्जते तच्चिन्त्यं संज्ञाशब्दान्तर्भावेन देवतात्वाभावादिति ।

विश्वे देवा इति । शुभार्थी प्रथमान्तेन वृद्धौ सङ्कल्पमाचरेत् । न षष्ठ्या, यदि वा कुर्यान्महान्दोषो ऽभिजायते इति सङ्ग्रहवचनात्सर्वत्र सङ्कल्पवाक्ये प्रथमान्तपदान्येवोच्चारयन्त्याधुनिकाः । वस्तु-

१ कर्माङ्गश्राद्धलक्षणं श्राद्धचन्द्रिकायाम् । निषेककाले सोमे च सीमन्तोन्नयने तथा । ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गसंज्ञकम् इति ।